No share prices,
no political fortunes, yet...

# "Over 40% of Heritage readers are professionals or executives, 61% from households with a professional / executive as the chief wage earner. Half hold a postgraduate degree or a professional diploma."

– from an IMRB survey conducted in Oct. 1986




It's an unusual magazine. It has a vision for today and tomorrow.

It features ancient cities and contemporary fiction, culture and scientific developments, instead of filmstar interviews and political gossip. And it has found a growing readership, an IMRB survey reveals. Professionals, executives and their families are reading The Heritage in depth – 40% from cover to cover, 42% more than half the magazine.

More than 80% of The Heritage readers are reading an issue more than once.

And over 90% are slowly building their own Heritage collection.

Isn't it time you discovered why?



# THE HERITAGE



CMP-2155

**So much in store, month after month**

कविहृदयम् –

# भगवदनुग्रहः

निध्यायसि विषयसुखं न ध्यायसि विषममस्य परिपाकम्।
बन्धुं तमेव चिन्तय बन्धुं मोक्तुं च यः क्षमते।।

– सभारञ्जनशतकम्
(नीलकण्ठदीक्षितः)

ऐहिकसुखासक्तं जनं वदति कविः – "भोः! भवान् सर्वदा इन्द्रियसुखं केवलं चिन्तयन् अस्ति खलु। तस्य घोरपरिणामविषये कदाचित् वा चिन्तितवान् वा? इन्द्रियसुखलोलुपता भवन्तं पुनः अपि अधः पातयति। इतः मोक्षः प्राप्तव्यः चेत् सर्वसमर्थः लोकबन्धुः सः भगवान् स्मर्तव्यः। भगवतः शरणं विना नान्या गतिः" इति।

यदा कष्टादिकं किमपि न भवति तदा सर्वे सन्तोषलीनाः सन्तः सुखसाधनानां सम्पादने अनुरक्ताः भवन्ति। सुखसाधनानाम् अपेक्षायाः आनन्त्यम्। एकं स्वीकृतं चेत् अपरस्य प्राप्तौ इच्छा। पर्याप्तम् इति भावना कदापि न भवति। अतः एव केनचित् उक्तम्–

न जातु कामः कामानाम् उपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।। इति।

भगवतः स्मरणं तदा एव भवति यदा कष्टानि आपतन्ति। तदा एव प्रायश्चित्तबुद्धिः उत्पद्यते। दुःखावेगवशात् भगवति पक्षपातस्य आरोपः अपि भवति कदाचित्। किम् इच्छामात्रेण,प्रार्थनामात्रेण अनुग्रहं कुर्यात् वा भगवान्?

कार्यसिद्धौ पर्याप्तमात्रेण परिश्रमः करणीयः। परिश्रमस्य न्यूनतायां फलम् अपि अपेक्षितं न सिध्यति। तथैव भगवतः अनुग्रहः प्राप्तव्यः चेत् अचला श्रद्धा अनन्यशरणागतिः इत्यादयः गुणाः अवश्यं भवेयुः। 'भगवन्! भवतः अस्तित्वं यदि सत्यम् एव तर्हि भवान् अनुगृह्णातु' इत्युक्तौ किं भगवदनुग्रहः भवेत्? प्रायः अस्माकं सर्वेषां प्रार्थना इतोऽपि विशेषतः भिन्ना न भवति।

# प्रथमाविभक्तिः इ.

शिष्यः- श्रीमन्! कर्मधारयसमासे पूर्वपदत्वेन स्थितः शब्दः स्त्रीलिङ्गे विद्यमानः भाषितपुंस्कः अपि यदि भवेत् तर्हि तस्य पुंवत् रूपम् इति खलु नियमः अस्ति?

आचार्यः- आम्। भाषितपुंस्कं नाम किमिति पुनः एकवारं स्मृत्वा वदतु तावत्।

शि - यः शब्दः स्त्रीलिङ्गे विद्यमानः पुल्लिङ्गरूपम् अपि प्राप्तुम् अर्हति तस्य 'भाषितपुंस्कः' इति नाम। विशेषणानि प्रयः अत्र व्यावहारिकानि उदाहरणानि।

आ - समीचीनम्, इदानीं भवतः संशयं निरूपयतु।

शि - 'कर्मधारयसमासे भाषितपुंस्कं पूर्वपदं पुंवत् रूपं प्राप्नोति' इति नियमे स्थिते पञ्चमीविभक्तिः, द्वितीयाविभक्तिः इत्यादिषु पञ्चम्यादिशब्दानां पुंवत् रूपं किमर्थं नास्ति? पञ्चमीद्वितीयादयः शब्दाः भाषितपुंस्काः स्त्रीलिङ्गे स्थिताः, कर्मधारयसमासस्य विषयाः च।

आ - ज्ञातः भवतः सन्देहः। पञ्चमविभक्तिः, द्वितीयविभक्तिः इत्येवं रूपाणि भवेयुः, न तु पञ्चमीविभक्तिः, द्वितीयाविभक्तिः इत्यादीनि इति किल भवतः अभिप्रायः?

शि - आम्, मया ये सामान्यनियमाः ज्ञाताः तदनुगुणं रूपाणि तथा भवेयुः।

आ - युक्तः भवतः सन्देहः। व्यवहारे पञ्चमीविभक्तिः, द्वितीयाविभक्तिः इत्यादीनि रूपाणि एव दृश्यन्ते, न तु प्रथमविभक्तिः, पञ्चमविभक्तिः इत्यादीनि। अत्र कोऽपि अन्यः मार्गः चिन्तनीयः। आं..., स्मृतम्। वत्स! अत्र अन्यथा एव समासः वक्तव्यः।

शि - तन्नाम एषः कर्मधारयस्य विषयः न इति?

आ - तथा न। अत्रापि कर्मधारयसमासः एव। कर्मधारये बहवः भेदाः सन्ति। भवता ज्ञातः प्रकारः विशेषणपूर्वपदः, यत्र भाषितपुंस्कत्वम् अन्वेति। अत्र सम्भावनापूर्वपदः कर्मधारयः वक्तव्यः। सम्भावनापूर्वपदे कर्मधारये तु पूर्वपदं संज्ञा भवति। अतः तत्र भाषितपुंस्कत्वं न अन्वेति।

शि - उदाहरणम्?

आ - आम्रः इति वृक्षः – आम्रवृक्षः, मद्रास् इति नगरं – मद्रास्नगरम् इत्यादीनि उदाहरणानि।

शि - तर्हि अत्र पञ्चमी इति विभक्तिः – पञ्चमीविभक्तिः, प्रथमा इति विभक्तिः – प्रथमाविभक्तिः इत्येवंरूपेण विग्रहः खलु?

आ - आम्। एवं समासः अङ्गीकृतः चेत् अन्या समस्या उत्थिता भवति। आम्रः मद्रास् इत्यादीनि संज्ञापदानि। अतः सम्भावनापूर्वपदे कर्मधारये पूर्वपदं संज्ञाबोधकं स्यात्। अत्र विभक्तिबोधकानां प्रथमादीनां संज्ञात्वं वक्तव्यं भवति।

शि - प्रथमादयः संज्ञाः इति कुत्रापि उल्लेखः दृश्यते वा?

आ - आं, सिद्धान्तकौमुद्यां स्वौजसमौट् .... (पा.सू.-४-१-२) इत्यस्य सूत्रस्य वृत्तौ लिखितम् अस्ति – "सु, औ, जस् इत्यादीनां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञाः" इति।

शि - प्रथमातिथिः, पञ्चमीतिथिः इत्यादौ अपि एवम् एव सम्भावनापूर्वपदत्वं वक्तव्यं भवति खलु?

आ - आम्। तत्रापि प्रथमादीनां संज्ञात्वम् एव।





# चन्दमामा

फेब्रवरी-१९८८

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००

# चन्दमामा

संस्थापकः- **'चक्रपाणिः'** सञ्चालकः- **'नागिरेड्डी'**

'भाषाप्रचारेण संस्कृतिप्रचारेण वा किं सिध्यति? यस्मिन् देशे उदरपूरणस्य एव महती समस्या विराजते तत्र संस्कृतिप्रचारस्य का आवश्यकता?' इति केषाञ्चित् वादः।

'दारिद्र्यं वस्तुतः भीकरी समस्या। तस्याः मूलोच्चाटनार्थं सततप्रयत्नः करणीयः' इति तु सत्यम् एव। किन्तु एतावता एव समाजस्य प्रगतिः सिध्यति इति न भ्रमितव्यम्।

येषां तु उदरपूरणं न समस्या तादृशाः अपि अत्र असङ्ख्याः सन्ति। एतेषां संस्कारविषये अपि चिन्तनीयम् एव खलु? गान्धीजी वदति– "अस्यां भूमौ आहाराभावतः यावन्तः मरणं प्राप्नुवन्ति, ततोऽप्यधिकम् अधिकाहारसेवनेन, अपथ्याहारसेवनेन च म्रियन्ते" इति। अतः उदरपूरणं कथम् इति चिन्तनस्य समकाले एव उदरपूरणानन्तरं किम् इत्यपि सगम्भीरं चिन्तनीयम्।

संस्कृतिः अस्मान् मानवान् करोति, पशुजीवनात् अस्मान् उन्नयति। अस्माकं जीवनं समृद्धं करोति। मात्स्यन्यायेन जीवनं निवारयन्ती दुर्बलानां जीवनार्थम् अपि अवकाशं कल्पयति।

अतः एव भरतभूमौ सामान्याः, अशिक्षिताः चापि संस्कृतिं, संस्कृतिप्रवाहिकां संस्कृतभाषां च विशेषतः इच्छन्ति। को वा आत्मनः जीवनस्य उन्नतिं न इच्छति?




सम्पुटः-४ फेब्रवरी-१९८८ सञ्चिका-११

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००

रसप्रश्नाः –

# सीतान्वेषणप्रयत्नः

[सुग्रीवस्य आदेशानुसारं सर्वे वानराः सीतान्वेषणार्थम् एकैकां दिशम् अनुसृतवन्तः। सपरिवारः हनूमान् लङ्कायाः दिशि प्रस्थितवान्। एतां घटनाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।]

I सीतान्वेषणार्थं सहचरैः प्रस्थितः हनूमान् कां दिशम् अनुसृतवान्?

१. दक्षिणदिशम्। २. पूर्वदिशम्। ३. उत्तरदिशम्।

II विन्ध्यपर्वते ते एकां गुहां प्रविष्टवन्तः, यत्र च प्रविष्टाः बहिः आगन्तुं न शक्नुवन्ति। तस्याः गुहायाः नाम किम्? केन निर्मिता सा?

१. अजन्ता, मयेन। २. ऋक्षबिलम्, मयेन। ३. गुहेश्वरः, जक्कणाचार्येण।

III तां गुहां रक्षयन्त्याः वृद्धायाः नाम किम्?

१. प्रभावती। २. सूर्यप्रभा। ३. स्वयंप्रभा।

IV लङ्कायां सीता बन्धने अस्ति इति सुस्पष्टं कथयन् सम्पातिः कः?

१. जटायुषः अनुजः। २. जटायुषः पिता। ३. जटायुषः अग्रजः।

V सीतादेवी लङ्कायां बन्धने अस्ति इति कथनेन सम्पातेः कः लाभः जातः?

१. दग्धं पक्षद्वयं पुनः आगतम्।
२. तत्क्षणे एव सः मोक्षं प्राप्तवान्।
३. अपूर्वाः काश्चन शक्तीः प्राप्तवान्।

उत्तराणि –

I–१. II–२. III–३. IV–३. V–१.

# रसवार्ताः



## अतिप्राचीनम् अण्डम्

पश्चिमकोलोराडाप्रदेशे एषु दिनेषु १४५० लक्षवर्षेभ्यः पूर्वं स्थितायाः राक्षसगोधिकायाः अण्डानां खर्पराः प्राप्ताः। एतत् अण्डम् एव विश्वे अति प्राचीनम् इति परिगण्यते। यत्र एतत् अण्डं प्राप्तं तत्र तत् प्रसूतवत्याः राक्षसगोधिकायाः अन्वेषणे सन्ति विज्ञानिनः। प्राप्तानाम् एतेषां खर्पराणाम् आधारेण अनुमीयते यत् तच्च अण्डं ७६ सें.मी. उन्नतं, ९ सें.मी. विस्तृतं च आसीत् इति।

## अन्तर्जलज्ञानी बालकः

सौदी अरेबिया देशीयः हान्दन् असैरी नाम दशवर्षीयः बालकः भूमेरधः कुत्र जलं प्राप्यते इति निरायासं वक्तुं शक्नोति। तदीयः पिता गृहसमीपे कूपस्य खननार्थं स्थलस्य अन्वेषणं कुर्वन् आसीत्। तदा असैरी जलस्थानं सूचितवान्। एतदनन्तरं तस्य बालस्य सूचनानुसारम् आभाप्रदेशस्य दक्षिणे निवसन्तः सामान्यतः २५० कूपान् खानितवन्तः।





## सूर्यस्य वयः

सूर्यमण्डलं ६०,००० लक्षवर्षेभ्यः प्राचीनम् इति काचित् धारणा अस्ति। किन्तु भारतीयः खगोलविज्ञानी बदनवाल श्रीकान्तन् महोदयः वदति यत् सूर्यस्य वयः ४ ६००० लक्षवर्षाणि एव इति। मास्कोनगरे प्रवृत्तायां अन्ताराष्ट्रिय-विश्वकिरण-विज्ञानपरिषदि सः एतं वादम् उपस्थापितवान्। एतस्य धारणायाः प्राचीनधारणायाः च मध्ये १४००० लक्षवर्षाणां भेदः दृश्यते।

## एकेन पादेन विश्वपर्यटनम्

द्वितीये प्रपञ्चयुद्धे ट्रिस्टन् जोन्स् नामकस्य सैनिकस्य वामः पादः व्रणितः। सः समुद्रप्रयाणार्थम् अनर्हः इति वदता ब्रिटिष् रायल् नेवी संस्थया सः उद्योगात् निष्कासितः। अनन्तरं तस्य वामः पादः कर्तितः। तथापि सः ३४ वर्षात्मके अवधौ ६४०,००० की.मी. दूरं यावत् समुद्रप्रयाणं कुर्वन् त्रिवारं विश्वपर्यटनं कृतवान्।



पुराणगाथावली –

# दुर्गमः

प्राचीनकाले दुर्गमः नाम दैत्यः आसीत्। सः सज्जनानां मुनीनां च पीडनार्थं नूतनं मार्गम् अन्वेष्टुम् आरब्धवान्। एकदा सः चिन्तितवान् यत् मुनिभिः ये यज्ञयागादयः क्रियन्ते तेषां मूलं तु वेदाः। वेदोक्तेन क्रमेण एव ते प्रचलन्ति। यज्ञाः स्थगनीयाः चेत् वेदाः अपहरणीयाः इति। अनन्तरं सः दुर्गमः घोरेण तपसा अपूर्वाः शक्तीः सम्पादितवान्। तासां शक्तीनां साहाय्येन मुनीनां समीपे स्थितान् वेदान् चोरितवान्। ऋषिमुनयः वेदान् यथा पूर्णतः विस्मरेयुः तथा अपि कृतवान्।

एतत्कारणतः मुनयः यज्ञयागादीन् कर्तुं न शक्तवन्तः। यज्ञाः प्रार्थनाः च स्थगिताः। मन्त्राः विस्मृताः इत्यतः नित्यकर्म सन्ध्यावन्दनम् अपि स्थगितम् अभवत्। मुनयः दुःखसागरे निमग्नाः। क्रमशः मुनयः जीवने एव वैराग्यं प्राप्तवन्तः। यज्ञानां प्रार्थनादीनां च अभावतः मानवानां दिव्यशक्तीनां च मध्ये स्थितः सम्बन्धः अपि स्थगितः। ऋतुचक्रे अव्यवस्था उत्पन्ना। वृष्टेः अभावतः वनस्पतयः वृक्षादयः च शुष्काः। नद्यः पङ्कमय्यः जाताः।

दिने दिने मानवानां जीवनम् असहनीयतां गतम्। अतः मुनयः सर्वे सम्भूय हिमालयं गत्वा दुर्गादेव्याः दर्शनं प्राप्य स्वकीयां दयनीयपरिस्थितिं निवेदितवन्तः। सज्जनानाम् एतेषां कष्टानि श्रुतवत्याः दुर्गादेव्याः नेत्रे आर्द्रे जाते। अनन्तरक्षणे मुसलधारया वृष्टिः जाता।

ऋषिमुनयः दुर्गादेव्याः दर्शनार्थं गतवन्तः इति वार्तां श्रुत्वा दुर्गमः अपि हिमालयं प्रति आगतवान्। तदा दुर्गामातुः शरीरात् सहस्रशः दिव्यायुधानि निर्गतानि। तैः घातितः दुर्गमः गतप्राणः जातः।

दुर्गमस्य मरणात् ऋषयः पुनः अपि वेदान् प्राप्तवन्तः। यज्ञयागादयः पुनः प्रवृत्ताः। लोकः सुखसम्पन्नः जातः।






# दण्डः अपि गुणाय

नारायणपुरे शिवप्रसादः नाम कश्चन गृहस्थः आसीत्। सः मध्यमवर्गीयः। तस्य गृहे सः, तदीया प्राणसमाना पुत्री सुशीला च निवसतः। सुशीला यदा अल्पवयस्का बालिका आसीत् तदा एव तदीया माता दिवङ्गता। शिवप्रसादः एव पुत्रीं प्रीत्या पालितवान्। इदानीं सा विवाहयोग्ये वयसि आसीत्।

शिवप्रसादः पुत्र्याः निमित्तं वरान्वेषणम् आरब्धवान्। यः तरुणः धनिककुले जातः, सुसंस्कृतः च भवति तादृशाय सः स्वपुत्रीं दातुम् इच्छति स्म। एकदा भरतपुरनगरस्य प्रसिद्धः आढ्यः वणिक् श्यामसिंहः स्वपुत्रस्य महेशस्य निमित्तं वधूदर्शनार्थं पत्नी-पुत्राभ्यां सह सुशीलां द्रष्टुम् आगतवान्। सुशीलायाः अनुपमं सौन्दर्यं, सुसंस्कृतं व्यवहारं, गृहकार्यकौशलं च दृष्ट्वा ते सन्तुष्टाः। तथापि ते "त्रिचतुराणां दिनानाम् अनन्तरं निर्णयं श्रावयिष्यामः" इति उक्त्वा ततः निर्गतवन्तः।

तद्दिने सायङ्काले विपणिं गत्वा प्रत्यागतः शिवप्रसादः पाककार्यनिरतां पुत्रीम् उक्तवान्— "वत्से! अहं चिन्तयामि — अद्यतनः सम्बन्धः निश्चितः भवेत् इति। तथा चेत् भवती पतिगृहं गमिष्यति। तदा मया एव खलु स्वयंपाकः करणीयः? तदर्थम् अद्य आरभ्य एव भवती मां पाककलां शिक्षयतु" इति।

तस्मिन् एव समये तदीयः स्नेहितः माधवः तस्य गृहम् आगतवान्, उक्तवान् च— "भोः, प्रसाद! भवान् स्वपुत्र्याः निमित्तं वरान्वेषणं कुर्वन् अस्ति खलु? मम सहोदरस्य देवनाथस्य गृहं राजारामः नाम युवकः आगतः अस्ति। सः सुन्दरः, सुशिक्षितः, बुद्धिमान् च। सः श्वः



प्रातः एव स्वग्रामं वीरपुरं गमिष्यति इति श्रुतवान्। तस्मै कुतो वा सुशीला न प्रदर्शनीया?" इति।

तदा शिवप्रसादः– "मित्र! अद्य प्रातः एव भरतपुरात् आगताः वधूं दृष्ट्वा गतवन्तः। एतावत्पर्यन्तं तैः अङ्गीकारः, निराकरणं वा न सूचितम्। एवं स्थिते अन्यत्र प्रयत्नः उचितः न भवेत् खलु" इति उक्तवान्।

"तैः अङ्गीकारः दत्तः चेत् अन्यत्र प्रयत्नः अनुचितः भवेत्। किन्तु तैः तथा न कृतम्। अतः अन्यत्र प्रयत्नेन न कोऽपि दोषः" इति उक्तवान् माधवः।

'एतत् अपि युक्तम् एव' इति मन्यमानः शिवप्रसादः मौनं शिरः चालितवान्। माधवः ततः निर्गत्य राजारामेण सह प्रत्यागतवान्।

दश-पञ्चदशनिमेषपर्यन्तं विविधाः वार्तालापाः संवृत्ताः। अन्ते राजारामः उक्तवान्– "मदीयः इति अन्यः कोऽपि नास्ति। ऐश्वर्यं नाम एकं लघुगृहं, तत् परितः स्थिता भूमिः च। तस्यां भूमौ अहं शाकादिकं वर्धयामि। अतः एषु दिनेषु किञ्चित् धनं सम्पादयितुम् अपि शक्तवान्। चतस्रः महिष्यः अपि मया पाल्यमानाः सन्ति। अहं चिन्तयामि यत् एतेन सम्पादनेन मम गृहस्थजीवनं निरातङ्कं प्रचलेत् इति" इति।

अनन्तरं ततः निर्गमनसमये राजारामः शिवप्रसादम् उक्तवान्– "भवतः पुत्रीं यः कोऽपि सहर्षम् अङ्गीकुर्यात् एव। मम तु सा इष्टाय जाता। सा अपि यदि अङ्गीकुर्यात् तर्हि अविलम्बेन सूचयतु कृपया" इति।

राजारामः सुशीलायै अरोचत। सुशीलायाः इङ्गितं ज्ञात्वा शिवप्रसादः उक्तवान्– "राजारामः सज्जनः सुगुणी च। किन्तु एतदपेक्षया भरतपुरस्य सम्बन्धः एव उचितः इति मम अभिप्रायः। यतः ते धनिकाः" इति।

सुशीला पितुः वचनं मौनं श्रुतवती, तावदेव। प्रतिक्रियां कामपि न प्रदर्शितवती।

अनन्तरदिने प्रातः शिवप्रसादः– "अहम् अद्य भरतपुरं गत्वा श्यामसिंहं दृष्ट्वा तदीयम् अभिप्रायं ज्ञात्वा आगच्छामि। शीघ्रम् एव कोऽपि निर्णयः भवेत्। राजारामाय अपि अस्माभिः अस्मदीयः

अभिप्रायः सूचनीयः अस्ति खलु'' इति पुत्रीम् उक्त्वा भरतपुरं गतवान्।

पितुः गमनानन्तरं सुशीला द्वारं पिधातुम् उद्युक्ता। तत्समये कोऽपि अपरिचितः आगत्य सुशीलां पृष्टवान्– "शिवप्रसादस्य गृहम् एतत् एव वा?" इति।

"आं, किन्तु सः इदानीं गृहे नास्ति। अन्तः आगच्छतु, तस्मै किमपि वक्तव्यम् आसीत् वा?" इति पृष्टवती सुशीला।

सः अपरिचितः– "अहं वीरपुरात् आगतः। मम नाम गणेशः। मया श्रुतं यत् अस्मद्ग्रामीणः राजारामः शिवप्रसादस्य पुत्रीं दृष्ट्वा गतवान् इति। अहं हितचिन्तकः इत्यतः एकां वार्तां निवेदयितुम् अत्र आगतवान्। सः राजारामः चौर्यनिमित्तं वर्षद्वयं कारागारे स्थितः आसीत्। अतः एतस्मै कन्यादानतः पूर्वं शिवप्रसादः सुविचिन्त्य व्यवहरति चेत् वरम्" इति उक्त्वा ततः वेगेन निर्गतवान्।

राजारामविषयकम् अपवादं श्रुतवत्याः सुशीलायाः वज्राघातः जातः इव। तथापि सा स्वभावेन धैर्यशीला इत्यतः धैर्यच्युता न जाता। एतस्य वास्तविकता ज्ञातव्या एव इति निश्चित्य सा गृहं कीलयित्वा भाटकशकटम् आरुह्य वीरपुरं गतवती।

वीरपुरे राजारामस्य गृहस्य अन्वेषणे न तथा क्लेशः जातः। द्वारे उपस्थितां सुशीलां दृष्ट्वा राजारामः मन्दहासपूर्वकं पृष्टवान्–



"अहो! भवती! अत्र कथम् आगता?" इति।

सुशीला रोषयुक्तेन स्वरेण पृष्टवती– "अहं किञ्चित्कालतः पूर्वं भवद्विषये अपवादवचनं श्रुतवती। किं भवान् चौर्यस्य दण्डरूपेण वर्षद्वयं कारागारे स्थितवान्? सत्यं वदतु – का वस्तुस्थितिः?" इति।

राजारामः तत्क्षणे मौनं स्थितवान्। ताम् अन्तः नीत्वा आसने उपवेशितवान्। उक्तवान् च– "भवती मम विषये कुपिता खलु? अहं कारागारे आसम् इति तु सत्यम् एव। किन्तु तस्य कारणं चौर्यं न, अपि तु अन्यत्। विस्तरेण वदामि तत्" इति।

सुशीला मौनं स्थितवती।

राजारामः कथनम् अनुवर्तितवान्–



"बाल्ये एव अहं मातापित्रोः प्रीतितः वञ्चितः अभवम्। मम मातामही मां पालितवती। सा मां प्रीत्या पश्यति स्म। तस्याः लालनात् अहं स्वभावेन दुष्टः सञ्जातः। विद्याभ्यासः अर्धे एव स्थगितः। विंशतिवर्षीयः अपि अहं जीवननिर्वहणार्थं मार्गं न अन्विष्टवान्। मातामहीं पीडयित्वा धनं स्वीकरोमि स्म। नगरं गत्वा अपव्ययं करोमि स्म अपि।

एवं स्थिते एकदा अहं भाटकशकटेन नगरं गच्छन् आसम्। तदा मार्गे एका मध्यवयस्का स्त्री शकटं स्थगयितुं सूचितवती। तस्याः हस्ते एकं पात्रम् आसीत्। सा स्त्री मां पृष्टवती– "पुत्र! भवान् नगरं गच्छन् अस्ति वा?" इति। "आम्" इति उक्तवान् अहम्।

"तर्हि पुत्र! अल्पं साहाय्यं करोति वा भवान्? नगरे मम पुत्रः पठन् अस्ति। तस्य निमित्तं मया लड्डुकानि सज्जीकृतानि। तानि तदीयेन पित्रा नगरं प्रति नेतव्यानि आसन्। किन्तु सः अकस्मात् अस्वस्थः जातः। तानि लड्डुकानि एतस्मिन् पात्रे सन्ति। नगरे राममन्दिरस्य पार्श्वे नारायणः नाम कश्चित् तिष्ठति। तस्य हस्ते एतत् ददातु कृपया" इति उक्त्वा स्वहस्ते स्थितं पात्रं मम हस्ते स्थापितवती।

मम शकटः यदा राममन्दिरसमीपम् अगच्छत् तदा द्वौ भटौ मार्गे स्थित्वा शकटं स्थगयितुम् आज्ञापितवन्तौ। मम हस्ते स्थितं लड्डुकपात्रम् उद्घाट्य लड्डुकानि निष्कासितवन्तौ च। तेषाम् अधः सुवर्णाभरणानि आसन्।

तौ भटौ मां गले गृहीत्वा– "आवाम् अत्र एतेषाम् आभरणानां निमित्तम् एव स्थितवन्तौ। आगच्छतु आरक्षकस्थानकं प्रति" इति वदन्तौ बलात् मां शकटात् अवतारितवन्तौ। एतत् सर्वं दृष्ट्वा 'वास्तविकः चोरः ततः पलायितवान्।

अहं यम् अपराधं न कृतवान् तन्निमित्तं मया वर्षद्वयात्मकः कारागारवासः अनुभूतः। एतां वार्तां श्रुत्वा दुःखिता मम पितामही दशसु दिनेषु एव प्राणान् त्यक्तवती।"

एवं स्वकीयां कथां समाप्य राजारामः सुशीलाम् उक्तवान्– "कारागारे अहं शाकवर्धनकलां सम्यक् ज्ञातवान्।

कारागारविमुक्तेः अनन्तरं एतत् एव मम जीवनसाधनं जातम्" इति।

तदा सुशीला पृष्टवती– "यदा भवान् मम गृहम् आगतवान् तदा किमर्थं कारागारवासस्य विषयः न सूचितः?" इति।

राजारामः हसन् उक्तवान्– "कलङ्कावहम् एतं विषयं कथं वा प्रत्यक्षं वक्तुं शक्येत? तथापि वास्तविकीं परिस्थितिं निवेदयितुम् इच्छन् अहम् एव गणेशं भवत्याः गृहं प्रति प्रेषितवान्" इति।

राजारामः कारागारवासेन किञ्चित् कलङ्कितः इति सुशीलायाः एकत्र खेदः। वास्तविकीं स्थितिं सुस्पष्टं कथयतः तस्य प्रामाणिकतायाः विषये अपरत्र अभिमानः अपि। सा राजारामस्य अनुमतिं प्राप्य गृहं प्रत्यागतवती।

शिवप्रसादः अपि गृहं प्रत्यागतवान्। सः पुत्रीम् उक्तवान्– "भवती कुत्र गतवती आसीत्? कस्यचित् मुखात् मया ज्ञातं यत् राजारामः वर्षद्वयं यावत् कारागारे आसीत् इति। अतः भवती तं विस्मरतु। भरतपुरीयाः सम्बन्धवर्धनम् अङ्गीकृतवन्तः। किन्तु ते वरदक्षिणारूपेण पञ्चाशत् सहस्रं रूप्यकाणि इच्छन्ति। धनिकानां वर्गे एतत् सर्वं सहजम्। भवती चिन्तां न करोतु। गृहं विक्रीय तत् धनं सम्पादयिष्यामि" इति।

"तात! गृहविक्रयणस्य आवश्यकता कापि नास्ति। राजारामः न चोरः। यथेष्टम् ऐश्वर्ये विद्यमाने अपि ये वरदक्षिणां पृच्छन्ति ते एव चोराः। राजारामस्य मुखात् मया वस्तुस्थितिः ज्ञाता। सः निर्दोषी। किन्तु कारागारवासः तस्य जीवने महत् परिवर्तनम् अकरोत्। पूर्वं सः धनस्य अपव्ययं कुर्वन् आसीत्। इदानीं धनं सम्पादयति। श्रमस्य मूल्यं ज्ञातवान् अस्ति। अतः अहं राजारामम् एव परिणेतुम् इच्छामि" इति सुशीला स्वकीयाम् हृद्गतं प्रकटीकृतवती।

शिवप्रसादः अपि पुत्र्याः निर्णयं युक्तं मन्यमानः अङ्गीकारपूर्वकं शिरः चालितवान्।





# उद्योगप्रयत्नः

धनगुप्तः श्रीपुरस्य सुप्रसिद्धः सुवर्णकारः। तस्य आपणे श्रीधरः नाम युवकः कार्यं करोति स्म। श्रीधरः वाणिज्यसम्बन्धीनि सर्वाणि कार्याणि महता कौशलेन करोति। गणनालेखनकार्यम् अपि निर्वहति। श्रीधरस्य कारणतः धनगुप्तः बहुधा लाभं प्राप्तुं शक्तवान्। किन्तु धनगुप्तः विशेषलाभप्राप्तेः प्रतिक्रियारूपेण श्रीधराय न पुरस्कारादिकं ददाति, न वा तस्य वेतनं वर्धयति।

प्राप्यमाणेन वेतनेन श्रीधरस्य दैनन्दिनजीवनस्य निर्वहणं तु भवति स्म एव। किन्तु पत्नीपुत्रादीनां लघ्वीः अपेक्षाः अपि सः पूरयितुं न शक्नोति। गृहार्थं नूतनं किमपि वस्तु आनेतव्यं चेत् कष्टाय भवति स्म। यजमानः -वेतनं वर्धयेत् इति श्रीधरः प्रतिमासम् अपि चिन्तयति। किन्तु सदा तद्विषये निराशा एव। बहवः मासाः यदा अतीताः तदा सः निश्चितवान् यत् अन्यत्र कुत्रापि सुवर्णकारस्य आपणे उद्योगं प्राप्तुं प्रयत्नः करणीयः इति।

श्रीपुरस्य समीपे एव कमलापुरं नाम लघुनगरम् अस्ति। श्रीधरः तत्र गतवान्। रत्नवणिजा अनन्तगुप्तेन मिलितवान् च। अनन्तगुप्तः श्रीधरं वाणिज्यसम्बन्धे कांश्चन प्रश्नान् पृष्टवान्। श्रीधरस्य उत्तरैः सः अतीव सन्तुष्टः। श्रीधराय उद्योगं दातुं सः सिद्धः जातः अपि। तथापि श्रीधरविषये इतोऽपि अधिकं विवरणं प्राप्तुं सः निश्चित्य धनगुप्तस्य समीपं गतवान्।

अनन्तगुप्तः श्रीधरस्य कार्यस्य विषये धनगुप्तं बहुधा पृष्टवान्। तदा धनगुप्तः श्रीधरस्य प्रामाणिकतां बुद्धिमत्तां च निवेद्य उक्तवान्– "वस्तुस्थितिः तु एषा यत् अहं

"अनामिका"

श्रीधरकारणतः एव वाणिज्ये एवं प्रगतिं साधितवान्" इति।

एतदनन्तरं अनन्तगुप्तः श्रीधरम् आहूय उक्तवान्– "भवान् उद्योगार्थम् आगन्तुम् अर्हति" इति।

किन्तु आश्चर्यस्य विषयः यत् धनगुप्तेन यावत् वेतनं दीयते ततोऽपि न्यूनं वेतनं निश्चितवान् आसीत् अनन्तगुप्तः। अतः श्रीधरः तत्र गमनं निराकृतवान्।

एतदनन्तरं श्रीधरः कामाक्षीपुरस्य रत्नवणिजः चन्द्रगुप्तस्य समीपे उद्योगार्थं प्रयत्नं कृतवान्। चन्द्रगुप्तः अपि वाणिज्यविषये श्रीधरं बहून् प्रश्नान् पृष्टवान्। श्रीधरस्य उत्तरैः सन्तुष्टः सः दिनद्वयानन्तरम् आगन्तुं सूचितवान्।

श्रीधरस्य निर्गमनानन्तरं चन्द्रगुप्तः धनगुप्तस्य समीपम् आगत्य श्रीधरस्य व्यवहारः कथम् इति पृष्टवान्। धनगुप्तः अनन्तगुप्ताय यत् उक्तं तदेव उक्त्वा अन्ते सूचितवान्– "कालान्तरे एषः श्रीधरः स्वबुद्धिमत्तया रत्नवाणिज्यं स्वयम् आरभते एव" इति।

दिनद्वयानन्तरम् आगतं श्रीधरं सूचितवान् चन्द्रगुप्तः– "भवान् कार्यार्थम् आगच्छतु" इति। धनगुप्तेन यावत् वेतनं दीयते ततोऽपि किञ्चित् एव अधिकं वेतनं निश्चितम् आसीत् चन्द्रगुप्तेन। कामाक्षीपुरं श्रीधरस्य ग्रामात् सुदूरे अस्ति। अतः प्रयाणार्थं धनव्ययः




समयव्ययः च भवति। अतः श्रीधरः तत्र गमनम् अपि निराकृतवान्।

तेषु एव दिनेषु श्रीधरः धर्मपुरस्य रत्नवणिजः विकासगुप्तस्य समीपम् अपि गतवान्। श्रीधरस्य व्यवहारेण उत्तरैः च विकासदत्तः अपि अतीव सन्तुष्टः। अनन्तरं सः विकासगुप्तः धनगुप्तस्य समीपम् आगत्य श्रीधरविषये पृष्टवान्।

तदा धनगुप्तः हसन् उक्तवान्– "श्रीधरः अलसः निष्प्रयोजकः च। विस्मरणशीलः चापि। तत्कारणतः मया वाणिज्ये कदाचित् हानिः अपि अनुभूता। भवान् आत्मीयः इत्यतः मया वस्तुस्थितिः उक्ता" इति।

"भवान् वस्तुस्थितिकथनेन माम् अत्यन्तम् उपकृतवान्" इति उक्त्वा

विकासगुप्तः ततः निर्गतवान्।

एतत् सम्भाषणं यदा प्रवृत्तं तदा श्रीधरः अन्तः प्रकोष्ठे एव आसीत्। सः वार्तालापं समग्रतया श्रुतवान् खिन्नः च।

सः बहिः आगत्य धनगुप्तं खेदेन उक्तवान्– "श्रीमन्! भवान् एवं किमर्थं कृतवान्? एतावत्पर्यन्तं भवान् सदा मम प्रशंसां करोति स्म। इदानीं तु मम विषये दुरभिप्रायं जनयन् उत्तमोद्योगस्य प्राप्तितः मां वञ्चितं कृतवान्" इति।

तदा धनगुप्तः श्रीधरस्य स्कन्धे हस्तं संस्थाप्य– "इतःपूर्वं भवान् स्थलद्वये उद्योगार्थं प्रयत्नं कृतवान् खलु? उभयत्रापि अत्र यावत् दीयते ततोऽपि अधिकं वेतनं न निश्चितम्। अन्येषां द्वारा मया एताः वार्ताः सङ्गृहीताः। विकासगुप्तः किञ्चित् अधिकम् एव वेतनं दातुं सिद्धः आसीत् इति तु सत्यम् एव" इति उक्तवान्।

"तर्हि किमर्थं भवान् मयि अविद्यमानान् लोपान् आरोप्य उद्योगतः मां वञ्चितं कृतवान्?" इति पृष्टवान् श्रीधरः।

तदा धनगुप्तः उक्तवान्– "श्रीधर! मत्समीपे उद्योगे स्थितः भवान् यथा मम हितं चिन्तितवान् तथैव अहम् अपि भवतः हितम् एव चिन्तयन् आसम्। भवान् तु गृहस्थः। गृहे पत्नीपुत्रादयः सन्ति। अतः मया अधिकं वेतनं दत्तं चेदपि भवान् सञ्चयं किमपि कर्तुम् अशक्तः अभविष्यत्। भवतः पुत्री प्राप्तवयस्का खलु? सद्यः एव तस्याः विवाहः करणीयः। तन्निमित्तम् अहं भवतः नाम्नि किञ्चित् धनं वित्तकोषे स्थापितवान् अस्मि। एतत् अतिरिच्य विकासगुप्तः यावत् दद्यात् तावत् वेतनम् एतस्मात् मासतः एव भवते दास्यामि। एतेन सन्तुष्टः खलु भवान्" इति।

एतावत्पर्यन्तं धनगुप्तविषये अन्यथाचिन्तनं यत् कृतम् आसीत् तद्विषये पश्चात्तापम् अनुभूतवान् श्रीधरः। तद्दिनतः सः पूर्वापेक्षया अधिकं श्रद्धया सहयोगं दत्तवान्।






# सुवर्णखनी

## २

[भूकम्पकारणतः सुवर्णखनीराज्यस्य मुखद्वारस्य मण्डपः पतितः। राजा शूरसेनः दुर्गनिर्मातुः वास्तुशिल्पिनः पौत्रं विनोदं कारागारे स्थापयितुम् आज्ञापितवान्। किन्तु विनोदः राजभटतः आत्मानं रक्षन् सुपरिचितम् अरण्यं प्रविष्टवान्। तत्र सः सुन्दरम् एकं सुवर्णस्त्रीविग्रहं दृष्टवान्। अज्ञातः कश्चन कण्ठस्वरः तम् आदिशत् यत् जलपातस्य पृष्ठतः स्थिताः गुहा प्रवेष्टव्या इति। तदनन्तरम् ......]

'जलपातस्य पार्श्वे स्थितां गुहां प्रविश्य तदधिष्ठात्र्याः देवतायाः अनुग्रहः प्राप्तव्यः' इति निर्दिशन्तम् अज्ञातकण्ठस्वरं श्रुत्वा विनोदः अतीव सन्तुष्टः।

'अद्यावधि जलप्रपातम् अतिक्रम्य कोऽपि न गतवान्, तथा गन्तुम् उद्युक्तः कोऽपि न प्रत्यागतवान् अपि' इति एषः अंशः विनोदस्य स्मरणे आगतः। क्षणकालं तस्य मनः शङ्कितम् अभवत्। द्वितीये क्षणे सः तस्मिन् कण्ठस्वरे दृढं विश्वासं प्राप्तवान्। सः अग्रे गन्तुं निश्चितवान्।

सुवर्णविग्रहस्य रक्षणं कथम् इत्येव प्रथमः प्रश्नः। विग्रहरक्षणार्थम् अन्यस्य साहाय्यम् अनिवार्यम् आसीत्। किन्तु तादृशः कः अस्ति? गाम्भीर्येण आलोचनानन्तरं सः निश्चितवान् यत् राज्ञः शूरसेनस्य एव साहाय्यं प्रार्थनीयम् इति। राजानम् अतिरिच्य समर्थः अन्यः कः वा स्यात्?

मनोजदासः



तस्मिन् समये पूर्वस्यां दिशि मन्दा अरुणच्छाया उदिता आसीत्। सः विग्रहस्य मुखं पुनः एकवारं दृष्टवान्। विग्रहः मन्दहासं प्रकटयन्ती अस्ति इव!

विनोदः दुर्गस्य दिशि प्रस्थितवान्। यदा सः दुर्गस्य द्वारप्रदेशं प्राप्तवान् तदा द्वारपालकः प्रभातकाहलं वादयन् आसीत्। विनोदः द्वारपालकस्य समीपं गतवान्, तम् उक्तवान् च– "मया एतत्क्षणे एव महाराजः द्रष्टव्यः" इति।

"अहो! महाराजस्य दर्शनम् इच्छति भवान्! महाराजस्य उत्थानात् पूर्वम् एव कीदृशी सा आवश्यकता उपस्थिता? भवान् कस्य महाचक्रवर्तिनः पुत्रः, यस्य भवतः इच्छामात्रेण महाराजः अविलम्बेन दर्शनं दद्यात्? प्रातःकालस्य सूचनार्थं मया इदमिदानीं प्रभातकाहलं वादितम्। अस्माकं कर्तव्यं समाप्तम्। इतःपूर्वं सूर्यस्य कर्तव्यं यत् सः महाराजस्य शयनागारस्य वातायने स्वकिरणान् प्रसार्य महाराजं जागरयेत्" इति उपहासपूर्णेन स्वरेण उक्तवान् रक्षकभटः।

विनोदः तस्य वचनं तृणीकृत्य रक्षकभटानां दृष्टिपाततः आत्मानं रक्षन् दुर्गस्य अन्तः गतवान् एव।

"तिष्ठतु रे!" इति गर्जन्तः रक्षकभटाः तम् अनुसृत्य धावन्तः आगतवन्तः। किन्तु विनोदस्य मुखे स्थितम् अलौकिकं तेजः दृष्ट्वा ते तत्रैव स्तब्धाः अभवन्। 'युवकं तं निरोद्धुं किमर्थं न शक्तम्' इति ते स्वयम् एव न जानन्ति स्म।

विनोदः वेगेन अग्रे गतवान्। कस्यचित् सेवकस्य मुखात् महाराजस्य शयनप्रकोष्ठस्य दिशं ज्ञातवान्। शयनागारस्य समीपं गत्वा सः उच्चैः उक्तवान्– "महाराज! जागरितः भवतु, उत्तिष्ठतु। अपूर्वां शुभवार्तां श्रावयितुम् अहम् आगतवान् अस्मि" इति।

विनोदस्य वचनं श्रुत्वा क्रुद्धः कश्चन सेवकः तर्जितवान्– "रे! मूर्ख! समुदाचारम् एव न जानाति खलु भवान्। महाराजस्य आह्वानसमये बिरुदावली प्रथमम् उच्चारणीया इत्यपि अजानन् कीदृशः मूर्खशिखामणिः भवान्!" इति।

विनोदः राजसेवकस्य तर्जनम् अशृण्वन्



इव पुनः अपि उच्चैः आहूतवान्– "महाराज ...! महाराज ...!" इति।

असमये श्रूयमाणम् अनिरीक्षितम् आह्वानं श्रुत्वा महाराजः जागरितः अभवत्। उत्थाय सः वातायनसमीपम् आगतवान्। वातायनपार्श्वे स्थितस्य महाराजस्य मुखं दृष्ट्वा भीतेषु राजसेवकेषु केचन स्तम्भस्य च्छायायां निलीय स्थितवन्तः, अन्ये केचन द्वारस्य पृष्ठतः तिष्ठन्तः आत्मानं गोपितवन्तः। 'निद्राभङ्गात् कुपितः महाराजः न केवलं तं युवकम्, अस्मान् अपि कठोरं दण्डयेत्' इति तेषां मनसि भीतिः।

कुपितः महाराजः क्षणकालं दन्तैः कटकटेति शब्दम् उत्पादयन् स्थितवान्। तदनन्तरम् अकस्मात् तस्य मुखे भावपरिवर्तनं जातम्। सः उच्चस्वरेण आज्ञां कृतवान्– "कः तत्र भोः! तं युवकं मम समीपं प्रेषयतु" इति।

महाराजस्य आदेशं विनोदः अपि श्रुतवान्। कस्यापि साहाय्यम् अनपेक्षमाणः सः महाराजस्य शयनप्रकोष्ठं प्रविष्टवान्। तयोः मध्ये कः वार्तालापः प्रवृत्तः इति कोऽपि न जानाति। सर्वैः दृष्टं यत् विनोदेन सह महाराजः सोपानमार्गेण गच्छन् अस्ति इति।

तत्समये तत्र उपस्थितः कश्चन मन्त्री प्रवृत्तं सर्वं ज्ञात्वा महाराजं निवेदयितुम् उद्युक्तः– "चण्डप्रचण्ड! शूरसेनमहाराज! भवता ...." इति।

राजा तस्य वचनम् तत्रैव स्थगयन् असमाधानेन उक्तवान्– "अये! किमपि मा प्रलपतु। मौनं माम् अनुसरतु" इति।

'अश्वम् आरुह्य गन्तव्यम्' इति अंशम् अपि विस्मृत्य महाराजः पादाभ्याम् एव गच्छन् विनोदम् अनुसरति।

एवं गमनसमये विनोदः महाराजं पृष्टवान्– "महाराज! यदाकदाचित् भवता अरण्ये विनोदयात्रा कुतो व न करणीया?" इति।

"अये मूर्ख! अरण्यप्रवेशस्य मम का आवश्यकता? महाराजानां निवासः प्रासादेषु भवति, न तु अरण्ये" इति उक्तवान् राजा शूरसेनः।

"महाराज! अरण्ये वृक्षाणाम् अधः



यदि न भवेत् तर्हि तस्य सुवर्णविग्रहस्य दर्शनम् कथम् अभविष्यत्?" इति वदन् विनोदः किञ्चिद्दूरे स्थितं सुवर्णविग्रहं हस्तसङ्केतेन सूचितवान्।

राजा शूरसेनः सुवर्णविग्रहं द्रष्टुं प्रयत्नं कृतवान्। किन्तु तेन तत्र किमपि न दृष्टम्। तस्य मुखे उपहासभावः आगतः। सः विनोदं पश्यन् उक्तवान्– "अये! उपहासार्थं मां किम् अत्र आनीतवान्? भवान् यं प्रदेशं प्रदर्शितवान् तत्र मया केवलं शिलाः दृश्यन्ते। का एषा क्रीडा भवतः?" इति।

एतत् श्रुत्वा आश्चर्येण स्तब्धः विनोदः क्षणकालानन्तरम् पृष्टवान्– "चण्डप्रचण्ड! राजाधिराज! सूर्यकिरणवशात् उज्ज्वलं प्रकाशमानः सुवर्णविग्रहः वस्तुतः अपि भवता न दृश्यते? एतत् तु अहं विश्वसितुं न शक्नोमि। अत्याश्चर्यकरम् एतत्! महाराज! एवं कथं भवितुम् अर्हति?" इति।

"कथम् इति? यतः तत्र सुवर्णविग्रहः नास्ति अतः एवं भवति। अये अविवेकिन्! प्रभाते आगत्य मम निद्रायाः भङ्गं कृतवान्। मां पादाभ्याम् एव एतावद्दूरम् आनीतवान्। अहं मधुरं स्वप्नं पश्यन् आसम्। स्वप्ने अहं वररूपेण अलङ्कृतः आसम् अपि। भवान् आगत्य मधुरं मम स्वप्नं नाशितवान्। भवान् शूलम् आरोपणीयः" इति इति क्रुद्धः राजा गर्जितवान्।

विनोदः एतेन विकारम् अप्राप्नुवन् सधैर्यम्

सञ्चारेण विलक्षणः आनन्दः लभ्यते। निर्झराणां जलस्य स्पर्शः, पक्षिणां कलरवस्य श्रवणं, वन्यपशूनां स्वच्छन्दविहारस्य दर्शनम् इत्यादयः सर्वे महन्तम् आनन्दं जनयन्ति" इति वनवैभवं वर्णयन् उक्तवान् विनोदः।

"स्वेच्छाविहारः! हुँ! सर्वेषां स्वेच्छाविहारस्य हरणे समर्थः अहम्। मत्तः श्रेष्ठः स्वेच्छाविहारी अन्यः कः स्यात्? किन्तु मित्र! वनप्रदेशे सञ्चारः करणीयः इति विचारः भवतः मनसि कथम् आगतः?" इति पृष्टवान् राजा शूरसेनः।

"महाराज! वनविहारेण अनेके लाभाः सन्ति। भवान् एव वदतु – वने मम प्रवेशः

उक्तवान्– "महाराज! भवान् इतःपूर्वं बहुवारं स्वप्ने वररूपं प्राप्तवान् स्यात्। बहवः शूलम् आरोपिताः स्युः अपि भवता" इति।

किन्तु महाराजः विनोदस्य उत्तरस्य श्रवणस्थितौ नास्ति। सः पादेन भूमिं घट्टयन् असमाधानेन उक्तवान्– "शयनागारतः प्रस्थितः अहं त्वरावशात् एकैकस्मिन् पादे एकैकविधां पादरक्षां धृतवान् अस्मि, पश्यतु। महाराजस्य प्रथमकर्तव्यं यत् सः प्रातः उत्थाय केशप्रसाधनं कुर्यात्। तदपि न कृतवान् अहम्" इति।

महाराजः उद्गच्छन्तं कोपम् असहायकतां च आत्मनि निरोद्धुं प्रयतमानः उच्चैः आक्रन्दनं कृतवान्। तस्य रवम् अनुकुर्वन्तः केचन शृगालाः अपि उच्चैः रवम् उत्पादितवन्तः।

एतं शृगालरवं महाराजस्य चीत्कारं च श्रुत्वा भीताः महाज्ञानिनः महामन्त्री च धावन्तः तत्र आगतवन्तः। महाराजः अपायग्रस्तः जातः इति तेषां विचारः आसीत्।

राजा शूरसेनः सर्वान् तीक्ष्णदृष्ट्या दृष्टवान्। तदा एकः महाज्ञानी गद्गदस्वरेण पृष्टवान्– "महाराज! भवतः किं जातम्?" इति।

अपरः महाज्ञानी भीत्या कम्पमानेन स्वरेण उक्तवान्– "चण्डप्रचण्ड! महाप्रभो!" इति।



मन्त्री महाज्ञानिनः च किं प्रवृत्तम् इति न जानन्ति। एतावत् तु ते जानन्ति स्म यत् कश्चन धृष्टः युवकः प्रभातसमये एव आगत्य महाराजेन सह वार्तालापं कृतवान्, महाराजश्च तस्य सूचनाम् अङ्गीकृत्य तेन सह एव पर्वतप्रदेशं प्रति पादाभ्यां गतवान् इति।

अत्रान्तरे महाराजः उच्चैः क्षुतवान्। क्षुवं श्रुत्वा महाज्ञानिनः इतोऽपि भीताः।

महाराजः भ्रुवं वक्रीकृत्य कटाक्षेण तान् पश्यन् उक्तवान्– "प्रातःकालीनः परिसरः राजवंशे जातस्य मम हानिकारकः इति अहं चिन्तयामि" इति। पुनः विनोदं तेभ्यः प्रदर्शयन् सः गर्जितवान्– "एषः मां क्रीडयति" इति।



"अहं क्रीडयामि? तत्रापि चण्डप्रचण्डं महाराजम्!" इति उद्गारं प्रकट्य क्षणकालं मौनं स्थितः विनोदः महाज्ञानिनः उक्तवान्– "भवन्तः वा महाराजस्य भ्रान्तिं निवारयन्तु। तत्र, साक्षात् भवतां पुरतः सुवर्णविग्रहः न दृश्यते वा?" इति।

विनोदस्य वचनं श्रुत्वा ते पञ्च महाज्ञानिनः कातरदृष्ट्या सुदूरं दृष्टवन्तः।

"भवता प्रदर्शितायां दिशि मया उलूकः कश्चन दृष्टः, तावदेव" इति उक्तवान् महामन्त्री।

'उलूकः न, मया तु तत्र कश्चन महाकारकः ऊर्णनाभः दृष्टः। एतादृशः ऊर्णनाभः मया इतःपूर्वं कदापि न दृष्टः" इति उक्तवान् महाज्ञानिषु अन्यतमः।

विनोदः पुनः अपि दृढस्वरेण उक्तवान्– "पूर्वं महाराजेन शुद्धोदनेन यः सुवर्णविग्रहः निर्मितः, यश्च भूकम्पवशात् भूमौ निलीनः, स च विग्रहः इदानीं दृष्टिगोचरः जातः अस्ति। तं विग्रहं भवत्सु कोऽपि द्रष्टुं न शक्नोति?" इति।

"किं वदति भोः भवान्! शतशः वर्षेभ्यः पूर्वं भूकम्पवशात् भूमौ निलीनः विग्रहः दृश्यते इति? एवं तर्हि भवान् निश्चयेन उन्मत्तः एव। भवतः मतिः भ्रष्टा अस्ति" इति उक्तवान् ज्येष्ठः महाज्ञानी।

तस्य कथनं समर्थयन्तः इतरे महाज्ञानिनः शिरः चालितवन्तः। एतं वार्तालापं श्रुतवतः शूरसेनस्य कोपः पराकाष्ठां गतः। सः उग्रेण कोपेन उक्तवान्– "एतं धूर्तं युवकं पर्वतखाते पातयन्तु" इति।

महाराजस्य शूरसेनस्य कठोराम् आज्ञां श्रुत्वा विनोदः ततः धावितुम् उद्युक्तः। किन्तु अत्रान्तरे राजा द्वित्राणि पदानि अग्रे आगत्य तदीयं वामहस्तं दृढं गृहीतवान्। अन्यौ महाज्ञानिनौ तस्य पादौ गृहीतवन्तौ। अपरः महाज्ञानी तस्य कण्ठं गृहीतवान्।

सर्वे सम्भूय विनोदम् उन्नीय खातसमीपं नेतुम् उद्युक्ताः। किन्तु अत्रान्तरे सुवर्णविग्रहस्य दिक्तः सुमधुरः सङ्गीतध्वनिः श्रुतः।

यौ महाज्ञानिनौ विनोदस्य पादौ

गृहीतवन्तौ आस्तां तौ ग्रहणं शिथिलीकृतवन्तौ। सन्तोषेण उच्चैः उक्तवन्तौ– "अहो! अपूर्वः सङ्गीतध्वनिः! अश्रुतपूर्वः स्वरः!" इति।

राजा शूरसेनः तयोः उद्गारविषये असमाधानं प्रकटयन् कोपेन उक्तवान्– "एतस्य अपूर्वस्य सङ्गीतस्य विषये महाराजेन मया एव सर्वप्रथमं किञ्चित् वक्तव्यम्, न तु भवद्भ्याम्। अहं वदामि – एषः सङ्गीतस्वरः शर्करालड्डुकवत् मधुरः। शतस्य, सहस्रस्य, लक्षस्य लड्डुकानां यः माधुर्यातिशयः भवति तद्वत् अस्ति एषः स्वरः" इति।

इदानीं सुवर्णविग्रहः सर्वैः सुस्पष्टं दृष्टः। ते विनोदं त्यक्त्वा निर्निमेषदृष्ट्या सुवर्णविग्रहं पश्यन्ति। तदा महाज्ञानिषु अन्यतमः उद्गारं प्रकटितवान्– "विग्रहस्य सौन्दर्यं इन्द्रधनुःसमानम् अस्ति" इति।

महाराजः शूरसेनः आत्मना गृहीतं विनोदस्य हस्तं त्यजन्– "अये युवक! एतस्य विग्रहस्य सौन्दर्यम् अपूर्वम्! अहं भवतः हस्तं गृहीतवान् खलु? तेनैव एषः विग्रहः दृष्टिगोचरः जातः। भवतः स्तुतिः यावत् वा कृता चेदपि अपर्याप्ता। भवान् प्रतिभाशाली पुण्यपुरुषः" इति उक्त्वा विनोदं प्रीत्या दृढम् आलिङ्गितवान्।

सन्तुष्टः विनोदः उक्तवान्– "चण्डप्रचण्ड! महाप्रभो! प्रतिमादर्शनेन भवतः सौन्दर्यं प्रवृद्धम्। भवतः सौन्दर्यम् अपूर्वं सञ्जातम्" इति।

"अहो! एवं वा? यस्मिन् दर्पणे अहं मम आकारं प्रतिदिनं पश्यामि स च दर्पणः कुत्र?" इति उक्त्वा दर्पणस्य अभावं स्मरन् राजा एकं महाज्ञानिनम् उक्तवान्– "भवत्सु एकः राजभवनं गत्वा त्वरया मम दर्पणम् आनयतु" इति।

किन्तु तेषु कोऽपि महाराजस्य अन्यस्य वा वचनस्य श्रवणे आसक्तः न आसीत्। ते सर्वे सुवर्णविग्रहस्य दर्शने तन्मयाः आसन्।

(अनुवर्तते)




राजधर्मः
'शववहनं नित्यकर्म' इति भावयन् त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य वृक्षात् अवतीर्णवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! निष्कारणेन द्वेषेण प्रेरितः कश्चित् भवन्तम् अस्मिन् कार्ये नियोजितवान् इति अहं भावयामि। मित्राणां, परिवारसदस्यानां, बान्धवानां च परस्परसम्बन्धे कदाचित् विलक्षणता प्रतीयते। कदाचित् शत्रुतायाम् अपि विलक्षणता दृश्यते। अत्र उदाहरणरूपेण अहं द्वयोः राजपरिवारयोः वार्तां श्रावयामि। तयोः परिवारयोः मध्ये आरम्भे मैत्री आसीत्। तदनन्तरं शत्रुता उत्पन्ना। पुनश्च तयोः स्नेहसम्बन्धः प्रवृद्धः। कुतूहलकारिण्याः एतस्याः कथायाः श्रवणेन भवतः श्रमः अपि परिहृतः भवेत्" इति।
वेतालकथा
S — F-4
SANKAR



अनन्तरं वेतालेन कथा आरब्धा—

पूर्वं चन्द्रगिरिराज्यं देवराजः नाम राजा पालयन् आसीत्। तस्य विष्णुगोपः इति एकः एव पुत्रः। यदा सः पुत्रः प्राप्तवयस्कः व्यवहारदक्षः च जातः तदा वृद्धः देवराजः विश्रान्तजीवनं यापयितुम् इच्छन् पुत्रं विष्णुगोपं सिंहासने उपवेशितवान्।

विष्णुगोपः विद्यावान् सुगुणी अपि। तस्य स्वभावः अपि उदारः। अतः पौराः नूतनस्य महाराजस्य शासनं सन्तोषेण स्वागतीकृतवन्तः।

एकदा विष्णुगोपः मृगयाविहारार्थं प्रस्थितवान्। अरण्ये अग्रे गच्छन् सः राज्यस्य सीमाप्रदेशं प्राप्तवान्। तस्य प्रदेशस्य परिचयम् अप्राप्नुवन् सः परितः परिशीलितवान्।

तत्रत्येन प्रकृतिसौन्दर्येण सः अतीव सन्तुष्टः अभवत्। उन्नताः पर्वताः, पर्वतमूले प्रवहन्ती नदी, हरिद्वर्णेन शोभमाना वनश्रीः, सततक्रियाशीलानाम् आश्रयभूतः ग्रामः इत्यादिभिः सः आकृष्टः।

विष्णुगोपः एतस्य स्थलस्य विषये समीपस्थान् जनान् पृष्टवान्। तेन सः ज्ञातवान् यत् एषः प्रदेशः स्वराज्यस्य न, अपि तु नागाचलदेशस्य इति। एतत् ज्ञातवतः विष्णुगोपस्य हृदये कोऽपि आतङ्कः। एतादृशः सुन्दरः प्रदेशः स्वराज्ये नास्ति खलु इति सः अतीव खिन्नः। क्षणकालं सः चिन्तामग्नः आसीत्। तदा कश्चन उपायः तस्य मनसि स्फुरितः। 'एषः विषयः साकारीकरणीयः एव' इति निश्चित्य सः मृगयाविहारं तावता एव परित्यज्य राजधानीं प्रत्यागतवान्।

राजा विष्णुगोपः रहस्यरूपेण सेनाम् एकत्रीकृतवान्। अकस्मात् नागाचलस्य उपरि आक्रमणं कृतवान्। नागाचलस्य राज्ञः शशिकान्तस्य तु एतत् आक्रमणम् अनिरीक्षितम् आसीत्। अतः सः विष्णुगोपं समर्थतया सम्मुखीकर्तुम् अशक्तः सन् पराजयम् अङ्गीकृतवान्। विष्णुगोपः नागाचलस्य उपरि स्वाधिकारं स्थापयितुं तु न इच्छति स्म। अतः सः अपेक्षितान् प्रदेशान् केवलं स्वायत्तीकृत्य सन्तोषेण स्वराजधानीं

प्रत्यागतवान्।

शशिकान्तः एतेन पराजयेन यद्यपि अधीरः जातः, तथापि आत्मनः क्षत्रियकुलोत्पन्नत्वं स्मरन् सः आत्मनि धैर्यं सम्पूर्य मनसः समस्थितिं सम्पादितवान्। एतस्य पराजयस्य प्रतीकाररूपेण किं करणीयम् इति मन्त्रिणां समावेशे पृष्टवान् च।

प्रधानः मन्त्री महाराजम् उक्तवान्– "महाराज! चन्द्रगिरेः सैनिकशक्तिः अस्मदपेक्षया अपि अधिका। अतः अस्माभिः सैन्यशक्तेः परिवर्धनार्थं विशेषयोजना करणीया। तदनन्तरम् एव वयं हस्तच्युतं प्रदेशं पुनः प्राप्तुं शक्नुयाम। अन्यः मार्गः नास्ति एव" इति।

अन्ये मन्त्रिणः अपि एतम् एव अभिप्रायं पुष्टीकृतवन्तः।

राजा शशिकान्तः तद्दिने एव सैन्यशक्तेः वर्धनार्थं योग्याः योजनाः कृतवान्। मन्त्रिणः सेनापतयः च त्वरितया गत्या एतस्मिन् कार्ये उद्युक्ताः जाताः।

शशिकान्तस्य अर्चना नाम पुत्री आसीत्। सा अनुपमसुन्दरी, इदानीं प्राप्तवयस्का च। राजकुमार्याः जन्मकुण्डलीं परिशील्य आस्थानज्योतिषिकाः उक्तवन्तः यत् ग्रहाणाम् आभिमुख्यम् अस्तीत्यतः एतस्मिन् एव वर्षे राजकुमार्याः विवाहः उचितः इति। तस्य वंशस्य सम्प्रदायः आसीत् यत्




राजकुमार्याः विवाहः स्वयंवरपद्धत्या प्रचलति स्म।

एतदनुगुणं राजकुमार्याः स्वयंवरः निश्चितः। आह्वानपत्रिका अपि सिद्धा। अपेक्षितानां राजकुमाराणां नामावलीं सज्जीकृत्य राजोद्योगिनः महाराजस्य समीपम् आगतवन्तः।

राजा तां पट्टिकां परिशील्य पृष्टवान्– "अत्र चन्द्रगिरिराजस्य तरुणस्य विष्णुगोपस्य नाम नास्ति एव किल! किमर्थम्?" इति।

'शत्रुः अपि स्वयंवरार्थम् आमन्त्रणीयः' इति कथयतः महाराजस्य चिन्तनरीतिं दृष्ट्वा सर्वे राजोद्योगिनः आश्चर्यचकिताः। तथापि महाराजस्य सूचनानुगुणं ते विष्णुगोपाय अपि

आमन्त्रणपत्रं प्रेषितवन्तः।

स्वयंवरदिनम् आगतम्। उपस्थिताः राजकुमाराः सर्वे पङ्क्तिशः आसनेषु उपविष्टवन्तः।

स्वयंवरसभायाम् उपस्थितं विष्णुगोपं दृष्ट्वा सर्वे राजानः आश्चर्यचकिताः। यतः ते सर्वे नागाचलस्य चन्द्रगिरेः च शत्रुतां जानन्ति स्म।

राजकुमारी अर्चना हस्तेन पुष्पमालां गृहीत्वा स्वयंवरमण्डपे उपस्थिता। तस्याः प्रियसखी प्रियंवदा उपस्थितस्य एकैकस्य अपि नाम-धामादिकं, गुणातिशयं, सम्पत्तिं, विशेषपराक्रमं च वर्णयन्ती ताम् अग्रे नयति।

राजकुमारी सर्वम् अपि मौनं शृण्वती अग्रे गतवती। अन्ते सा चन्द्रगिरेः पालकस्य नवयुवकस्य विष्णुगोपस्य पुरतः स्थितवती। तस्य कण्ठे पुष्पमालां स्थापितवती च।

राजकुमार्याः एतं व्यवहारं दृष्ट्वा उपस्थिताः सर्वे क्षणकालं स्तब्धाः! एतद्विषये परस्परं चर्चां कुर्वन्तः राजकुमारीं संशय-दृष्ट्या पश्यन्ति ते।

'यः मैत्रीं तृणीकृत्य आक्रमणं करोति तादृशं शत्रुराजम् एषा वृतवती खलु! किम् एतत् अनुचितं कार्यम्!' इति सर्वे उद्गारं प्रकटितवन्तः।

किन्तु राजा शशिकान्तः एतादृशं किमपि अविगणयन् सिंहासनात् उत्थाय विष्णुगोपं सगौरवं विवाहमण्डपं नीतवान्। अर्चनायाः विष्णुगोपस्य च विवाहः यथाविधि प्रवृत्तः। राजा शशिकान्तः उचितैः यौतकैः जामातरं



सत्कृत्य पुत्र्या सह तं प्रेषितवान्।

पञ्चषाः मासाः अतीताः। एकदा राजा शशिकान्तः मन्त्रिणः सेनाध्यक्षान् च आहूय पृष्टवान्– "अस्माकं सेना सर्वसमर्था जाता खलु?" इति।

"सेना तु इदानीं सर्वसमर्था अस्ति। किन्तु एषः प्रश्नः इदानीं किमर्थम्?" इति सर्वे पृष्टवन्तः।

"अस्माकं देशस्य ये भागाः पूर्वं हस्तच्युताः जाताः ते इदानीं चन्द्रगिरितः प्रति स्वीकरणीयाः" इति उक्तवान् राजा शशिकान्तः।

सर्वे विना वचनं ततः निर्गतवन्तः। 'युद्धार्थं सर्वैः सिद्धैः भवितव्यम्' इति राजाज्ञा श्राविता।

एषा वार्ता गुप्तचरद्वारा विष्णुगोपेन अपि ज्ञाता। अतः सः तद्दिने एव दूतद्वारा वार्तां प्रेषितवान् यत् पूर्वं वशीकृतेभ्यः नागाचलस्य प्रदेशेभ्यः मम सैनिकान् प्रत्यानेष्यामि इति।

जामात्रा प्रेषिताम् एतां वार्तां श्रुतवतः शशिकान्तस्य महान् सन्तोषः। नागाचलदेशे सन्तोषस्य तरङ्गाः उत्पन्नाः। 'हस्तच्युतः प्रदेशः पुनः प्राप्तः' इत्यतः तद्देशीयाः जनाः आनन्दोत्सवम् आचरितवन्तः।

वेतालः एवं कथां समाप्य अवदत्– "अये, राजन्! स्वपुत्र्याः स्वयंवरार्थं शत्रुराजाय आमन्त्रणपत्रं प्रेषयतः शशिकान्तस्य कः उद्देशः आसीत्? राजकुमारी अर्चना सर्वान् राजकुमारान् उपेक्ष्य पितुः वैरिणं राजकुमारं किमर्थं परिणीतवती? किं सा पितुः विषये



कुपिता? पुत्रीविवाहानन्तरं विस्मरणीयं पूर्वतनं वैरं स्मरन् शशिकान्तः पुनः किमर्थं युद्धार्थं सिद्धः जातः? पूर्वतनयुद्धे विजयी विष्णुगोपः इदानीं किमर्थं विना विरोधं स्वायत्तीकृतान् प्रदेशान् प्रत्यर्पितवान्? सः श्वशुरस्य सैन्यबलं दृष्ट्वा भीतः इति भावयाम वा? एतेषां प्रश्नानाम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः उत्तरं दत्तवान्- ''स्वयंवरपद्धत्याः वैशिष्ट्यं यत् तत्र राजकुमारी वरचयने पूर्णतः स्वतन्त्रा भवति। शत्रुमित्रभेदं कल्पयन् राजा शशिकान्तः केभ्यश्चित् आमन्त्रणं यदि न प्रेषयेत् तर्हि तेन राजकुमार्याः स्वातन्त्र्यम् अपहृतं भवेत्। तदा वरचयनं महाराजस्य इच्छानुगुणं जायेत, न तु राजकुमार्याः इच्छानुगुणम्। एतत्सर्वं जानन् शशिकान्तः शत्रवे अपि विष्णुगोपाय आमन्त्रणपत्रं प्रेषितवान्। राजकुमारी पितुः चिन्तनरीतिं सम्यक् जानाति। अतः सा गुणपक्षपातिनी सती वरचयनाधिकारं सम्यक् उपयुज्य योग्यं विष्णुगोपम् एव पतित्वेन वृतवती। राजा शशिकान्तः युद्धसन्नाहार्थं सेनां यत् आदिष्टवान् तत्रापि अनौचित्यं नास्ति। हस्तच्युतस्य प्रदेशस्य प्रतिस्वीकारः राज्ञः कर्तव्यम्। एतत् न पालितं चेत् राजधर्मस्य भङ्गः भवेत्। बन्धुसम्बन्ध-रक्षणापेक्षया कर्तव्यपालनं खलु प्रधानम्? विष्णुगोपः विना विरोधं स्वायत्तीकृतं प्रदेशं यत् प्रत्यर्पितवान् तत्र कारणं भीतिः न। राजकुमारी अर्चना शशिकान्तस्य अद्वितीया पुत्री। अतः कदाचित् वा नागाचलराज्यं जामातुः विष्णुगोपस्य अधीने आगच्छेत् एव। एवं स्थितौ वृथा रक्तपातः अन्याय्यः प्रजाहितविरुद्धः च खलु? अतः विष्णुगोपः तथा आचरितवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः शवसहितम् अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# पुष्पविकासः

नन्दीशः मध्यमवर्गीयः गृहस्थः। बाल्यतः अपि उत्तमानां पुस्तकानां पठने तस्य विशेषासक्तिः। पठनसमये सः बाह्यं प्रपञ्चं सर्वथा विस्मरति।

एकदा नन्दीशः कस्यचित् पुस्तकस्य पठने निमग्नः आसीत्। तदा तस्य पत्नी ऊर्मिला तम् आहूय उक्तवती– "एतं बालं किञ्चित् उन्नयतु भोः। अहं मम पाककार्यं समापयामि" इति।

नन्दीशस्य पुत्रः केशवः त्रिवर्षीयः बालः। ऊर्मिला बालं केशवं नन्दीशस्य पार्श्वे उपवेश्य अन्तः गतवती। नन्दीशः पुत्रस्य पुरतः काश्चन पाञ्चालिकाः स्थापितवान्। पुनः अपि पुस्तकपठने निमग्नः जातः च।

तत्समये आह्लादकरे तत्परिसरे परिवर्तनम् आरब्धम्। आकाशे नीलाः मेघाः सम्मिलिताः। शीतलः वायुः वाति स्म। अकस्मात् विद्युतः प्रस्फुरिताः। मेघगर्जनम् अपि आरब्धम्।

क्रीडनरतः बालः केशवः मेघगर्जनं श्रुत्वा भीतः। उच्चैः रोदनम् आरब्धवान् च। पुत्रस्य रोदनं श्रुत्वा ऊर्मिला पाकशालातः बहिः आगत्य पुत्रम् उन्नीतवती। प्रीत्या आलिङ्ग्य लालनवचनानि उक्तवती। तथापि केशवस्य रोदनं यथापूर्वम् अनुवर्तते।

पुत्रस्य रोदनं स्थगयितुम् अशक्ता ऊर्मिला पतिम् असमाधानेन उक्तवती– "एतत् मेघगर्जनं किमर्थम् उत्पद्यते इति न जानामि, यत् एतत् श्रुत्वा बालः भीतः भवति। भवान् तु सदा पुस्तकपठनरतः। किं किञ्चित्कालं पठनस्य विरामं दातुं न शक्नोति? एतं बालं गृहस्य पृष्ठतः किञ्चित् नयतु। तेन सः रोदनं विस्मरति। तावता अहं मम पाककार्यं समापयामि" इति।

नन्दीशः अनिवार्यतया पुस्तकं पार्श्वे स्थापितवान्। पुत्रं केशवम् उन्नीय गृहस्य पृष्ठतः गतवान् च। तत्र गमनसमनन्तरम् एव केशबः रोदनं स्थगयित्वा सन्तोषेण— "तात! पुष्पम्! पुष्पम्!" इति वदन् करताडनं कृतवान्।

केशवेन सूचितायां दिशि नन्दीशः दृष्टिं प्रसारितवान्। तत्र सुन्दराणि कानिचन पुष्पाणि तदा एव विकसितानि आसन्। तानि दृष्ट्वा एव केशवः सन्तोषं प्राप्तवान् आसीत्।

वस्तुतः अपि अपूर्वं दृश्यं तत्। एतादृशे समये अपि सुन्दरः पुष्पविकासः!

नन्दीशः पत्नीम् उच्चैः आहूतवान्— "अये! शीघ्रम् अत्र आगच्छतु। अत्र पश्यतु" इति।

ऊर्मिला तत्र आगत्य पृष्टवती— "किं तत् अपूर्वं दृष्टं भवता?" इति।

नन्दीशः पत्न्यैः सद्योविकसितानि तानि सुन्दराणि पुष्पाणि प्रदर्शयन् उक्तवान्— "एतादृशानि पुष्पाणि इतः पूर्वम् अत्र मया न दृष्टानि। सुन्दराणि पुष्पाणि! कथम् एतानि अत्र आगतानि?" इति।

ऊर्मिला पुष्पाणि दृष्ट्वा— "एतानि वा? मेघगर्जनकारणतः एतानि विकसितानि" इति उक्त्वा पुनः अन्तः गतवती।

नन्दीशः एकवारं पुत्रस्य हसन्मुखं पश्यति। पुनश्च विकसितानि तानि पुष्पाणि पश्यति। उभयम् अपि पश्यन् आश्चर्यम् अनुभवति।

एषा प्रकृतिः विलक्षणा एव। झञ्झावातैः विद्युत्स्फुरणैः, मेघगर्जनैः, तीक्ष्णैः अशनिपातैः च कदाचित् सर्वान् भाययति, पीडयति च। पुनः कदाचित् तै एव साधनैः सुन्दराणि पुष्पाणि विकासयति!

पुत्रे भीतिम् उत्पादितवत् मेघगर्जनं निन्दामि, उत सुन्दरं पुष्पं विकासितवत् तत् प्रशंसामि इति न जानाति नन्दीशः। सः तानि पुष्पाणि दृष्ट्वा केशवः इव स्वयम् अपि अतीव सन्तुष्टः आसीत्।



अस्माकं देशस्य वैशिष्ट्यानि–

# कोचिन् मन्दिराणि

भारतीयेतिहासस्य बहवः सन्दर्भाः केरलस्य कोचिन्प्रदेशे विभिन्नान् प्रभावान् जनितवन्तः। विश्वे अतिप्राचीनेषु यहूदीकेन्द्रेषु अन्यतमस्य स्थापनम् अत्रैव जातम्। इदानीं विद्यमानस्य यहूदीप्रार्थनालयस्य अपि सुदीर्घः प्राचीनेतिहासः अस्ति। नीलश्वेतवर्णीयैः चीनी-मृच्छदैः एतस्य प्रार्थनालयस्य छदिः आच्छन्ना अस्ति।





पोर्चुगीस्जनाः सर्वप्रथमं वास्को-डि-गामामहोदयस्य नेतृत्वे कल्लिकोटेमार्गेण अत्र आगतवन्तः। तत्समये वास्को-डि-गामा एतद्देशीयानां विषये हिंसात्मकं व्यवहारं प्रदर्शितवान्।

अत्रत्यः सेण्ट् फ्रान्सिस् प्रार्थनालयः भारते सर्वप्रथमं स्थापितः क्रिस्तदेवालयः। एषः आलयः पोर्चुगीस्जनानां शासनकाले केथोलिक् चर्च् नाम्ना, डच्चजनानां शासनकाले प्रोटस्टण्ट्चर्च् नाम्ना, आंग्लानां शासनकाले आंग्लिकन् चर्च् इति नाम्ना च प्रसिद्धः आसीत्। सद्यःकाले एषः प्रार्थनालयः 'चर्च आफ् सौत् इण्डिया' संस्थायाः अधीने अस्ति।





१६ शतके पोर्चुगीस्जनाः अत्र डच्भवनं निर्माय कोचिन्राजवंशीयेभ्यः उपायनरूपेण दत्तवन्तः। एतस्य भवनस्य भित्तिषु रामायणस्य काश्चन घटनाः चित्रिताः दृश्यन्ते।

सुलेमान्राजस्य वाणिज्यनौकाम् आरुह्य यहूदीजनाः अत्र आगतवन्तः इति श्रूयते। अत्रत्यानां शासकानाम् आश्रयेण आदरपूर्णेन व्यवहारेण च तुष्टाः यहूदीयाः अत्र सुखेन सन्तोषेण च जीवनं यापितवन्तः।





यहूदीयानां प्रार्थनालयस्य अन्तर्भागे स्थिताः अपूर्वाः अलङ्काराः विशेषतः प्रसिद्धाः। इस्रेल्प्रभुत्वं यदा स्थिरीकृतम् अभवत् तदा बहवः इतः तत्र गतवन्तः। तथापि तेषां प्रार्थनामन्दिरं तु श्रद्धाभक्तिपूर्वकं परिरक्षितम् अस्ति।

कोचिन्प्रदेशीयाः हिन्दू देवालयाः अपि अपूर्वाः एव। एतस्य प्रदेशस्य वैशिष्ट्यं यत् यहूदीयाः, क्रैस्ताः, महम्मदीयाः हिन्दवः च अत्र परस्परमैत्रीभावेन निवसन्ति।





प्रथमे क्रिस्तशताब्दे मलबारतीरं यदा सेण्ट् थामस् आगतवान् तदा एका यहूदीया महिला स्वागतं व्याहृतवती इति श्रूयते। स च तादृशः कश्चन कालः आसीत् यत् तत्समये मतीयं वैमनस्यं सर्वथा न आसीत्।

अत्रत्यानाम् ऐतिहासिकानां भवनानां पृष्ठभूमौ नीलः सागरः विराजते। अत्र एकत्र प्रशान्तगम्भीरः परिसरः, अपरत्र नौकास्थानादीनां वाणिज्यकेन्द्राणां कोलाहलः!






समुद्रतीरे अस्माकं दृष्टिं मत्स्यग्रहणदृश्यम् आकर्षति, यत्र च चीनादेशीयानि जालानि उपयुज्यन्ते। अत्रत्यानां बहूनां जीविका तु मत्स्यग्रहणम् एव। एषु दिनेषु मत्स्यग्रहणार्थम् आधुनिकानि उपकरणानि उपयुज्यमानानि सन्ति।



# पितृभक्तिः

पूर्वं कदाचित् चीनादेशे टोङ्ग्नामकः युवकः वसति स्म। यदा सः शिशुः आसीत् तदा एव तदीया माता दिवङ्गता। यदा सः अष्टादशवर्षीयः जातः तदा तदीयः पिता अपि दिवङ्गतः।

टोङ्गस्य पिता स्वजीवने किमपि न सञ्चितवान् आसीत्। अतः पितुः मरणकाले गृहे एकः दीनारः अपि न आसीत्।

टोङ्ग् पितुः उत्तरक्रियां शास्त्रोक्तरीत्या कर्तुम् इच्छति। पितुः शवस्थानस्य उपरि सुन्दरं शिलास्मारकं स्थापनीयम् इत्यपि तस्य इच्छा। किन्तु धनं विना एतत् सर्वं कथं वा कर्तुं शक्येत? धनसम्पादनार्थं तु एकः एव मार्गः दृश्यते यत् दासरूपेण आत्मनः विक्रयणं करणीयम् इति।

टोङ्ग् एकस्मिन् दृढपत्रे आत्मनः दासवृत्तिस्वीकारेच्छाम्, आत्मनः मूल्यं च लिखित्वा विपणौ कस्याश्चित् शिलायाः उपरि उपविष्टवान्।

दासं क्रेतुम् इच्छन्तः तस्य समीपम् आगच्छन्ति। तत्र लिखितं पठित्वा मौनं ततः निर्गच्छन्ति च।

टोङ्ग् अल्पेन मूल्येन आत्मनः विक्रयणं न इच्छति स्म। पितुः उत्तरक्रियार्थं स्मारकनिर्माणार्थं च यावत् आवश्यकं तावत् मूल्यं सः आत्मनः विक्रयणात् इच्छति। एतत्कारणतः आजीवनं दास्यम् अनुभोक्तव्यम् इत्यपि सः जानाति। तथापि सः एतत्सर्वं सोढुं सिद्धः सञ्जातः।

बहुकालः अतीतः चेदपि तं कोSपि न क्रीतवान्। मया सूचितेन मूल्येन प्रायः मां कोSपि न क्रीणीयात् एव इति आलोचयन् आसीत् सः।

तदा कश्चन अधिकारिवेषधारी तत्र

"चीनदेशस्य जानपदकथा"



आगतवान्। टोङ्गस्य वक्षःस्थले स्थिते फलके लिखितं सः पठितवान्। स्वेन सह आगतस्य सेवकस्य द्वारा धनं दापितवान्। क्रयपत्रम् अपि तत्क्षणे एव सिद्धम्।

टोङ्गस्य इच्छा पूरिता। सः पितुः उत्तरक्रियां शास्त्रोक्तक्रमेण कृतवान्। श्रेष्ठस्य शिल्पिनः द्वारा पितुः शवस्थानस्य उपरि सुन्दरं शिलामण्डपं निर्मापितवान्। अनन्तरम् आत्मानं क्रीतवतः नूतनजमानस्य गृहे कार्यम् आरब्धवान्। सः यजमानः एतस्य वसतिनिमित्तम् एकं कुटीरं दत्तवान्।

दिनानि अतीतानि। टोङ्ग् तु सन्तोषं सुखं च विना नित्यकार्ये व्यापृतः भवति। तथापि पितुः वार्षिकश्राद्धं तु महत्या श्रद्धया करोति।

एकदा शस्यसङ्ग्रहणकाले टोङ्ग् तीव्रेण ज्वरेण पीडितः अभवत्। उत्थातुम् अपि अशक्तः सः शयने निराशया रुदन् सुप्तः अस्ति।

ज्वरः दिने दिने वर्धते। एकस्मिन् दिने ज्वरतापवशात् सः अचेतनः अपि जातः। यदा सचेतनः जातः तदा सः कस्यचित् हितस्पर्शम् अनुभूतवान्। ज्वरेण तप्यमानः सः मन्दं नेत्रम् उद्घाट्य दृष्टवान्। तदा सः स्वपार्श्वे स्थिताम् करेण ललाटं मृदु स्पृशन्तीम् अलौकिकसुन्दरीं दृष्टवान्। 'भवती का?' इति प्रष्टुम् अपि टोङ्गस्य सामर्थ्यम् उत्साहः वा न आसीत्।

तदा सा एव मन्दहासपूर्वकम् उक्तवती— "भवतः रोगः अपसारणीयः, भवान् परिणेतव्यः च इति उद्देशेन अहम् अत्र आगतवती" इति।

सा किमपि कार्यम् आज्ञापयन्ती अस्ति इति भावयन् टोङ्ग् भयेन झटिति उत्थितवान्। निश्शक्तिः तस्य अपगता आसीत्। नूतना स्फूर्तिः शरीरे दृश्यते स्म। तस्याः वचनस्य भावः अपि तेन इदानीं ज्ञातः। 'पत्न्याः पोषणे मम सामर्थ्यं नास्ति' इति सः वक्तुम् उद्युक्तः। तस्य मनोभावं ज्ञातवती इव सा सुन्दरी उक्तवती— "जीवननिर्वहणविषये चिन्ता मास्तु। तं भारम् अहं निर्वक्ष्यामि" इति।

तेन लज्जितः टोङ्ग् स्वकीयानि छिन्नानि

मलिनानि च वस्त्राणि दृष्टवान्। तस्याः अपि वेषभूषादयः एवम् एव आसन्। तस्याः शरीरे एकम् अपि आभरणं न आसीत्।

अनन्तरं तौ पूजामन्दिरं गत्वा जानुद्वयं भूमौ स्थापयन्तौ पितृदेवताः नमस्कृत्य पतिपत्न्यौ जातौ।

सा कस्मिन् वंशे जाता, किं कुलं, कुतः आगता इत्यादिकं किमपि न जानाति टोङ्ग्। आत्मनः नाम 'ची' इति एतावदेव उक्तवती आसीत् सा। अधिकं किमपि वक्तुं सा न इष्टवती। एतावता एव टोङ्ग् अपि तृप्तः जातः।



तस्याः आगमनकारणतः तस्य कुटीरस्य परिसरः एव परिवृत्तः आसीत्। विद्यमानानि अल्पानि अपि पात्राणि सुन्दरतया सुव्यवस्थितं स्थापितानि। गृहस्य शोभा प्रवृद्धा आसीत्। टोङ्ग् प्रातः तृप्त्या भोजनं कृत्वा कार्यार्थं गृहात् निर्गच्छति। मध्याह्ने कार्यात् प्रतिनिवर्तनसमये पाकः सिद्धः भवति स्म।

तस्य पत्नी ची गृहे वेमसाहाय्येन सुन्दरैः वैविध्यमयैः चित्रैः अलङ्कृतानि वस्त्राणि वय्रति स्म।

तस्याः हस्तकौशलं तु आश्चर्यजनकम् आसीत्। तस्याः सीवननैपुण्यं समीपस्थैः ज्ञातम्। वस्त्रवणिजः तया निर्मितानि वस्त्राणि योग्येन मूल्येन प्रतिदिनं क्रीत्वा गच्छन्ति स्म।

'जीवननिर्वहणभारम् अहं निर्वहामि' इति सा यत् उक्तवती तत् तया अक्षरशः पालितम् अपि। पेटिकायां प्रतिदिनम् अपि रजतनाणकानां सङ्ख्या वर्धते।

एकदा सा टोङ्गं स्वसमीपम् आहूय पेटिकायां स्थितानि रजतनाणकानि प्रदर्शयन्ती तस्य हस्ते एकं पत्रम् अपि स्थापितवती। दास्यविमोचनपत्रं तत्। यजमानाय यावत् दातव्यम् आसीत् तत् समग्रतया दत्तम् इति तत् पत्रं सूचयति स्म। टोङ्गस्य नेत्राभ्याम् आनन्दाश्रूणि आगतानि।

"अहं भवतः निमित्तं इतः दक्षिणे कृषिक्षेत्रं स्वीकृतवती अस्मि। इतःपरं भवता अन्यस्य सेवा करणीया नास्ति। भवान् स्वतन्त्रतया जीवनं यापयितुम् अर्हति" इति।

टोङ्ग् आनन्दाश्रूणि स्रावयन् तस्याः

पादयोः पतनार्थम् उद्युक्तः। ची तं तस्मात् प्रयत्नात् निवारयन्ती प्रीत्या आलिङ्गितवती।

तद्दिनतः तस्य सौभाग्यं फलितम् इत्येव वक्तव्यम्। सः यत् करोति तत् लाभदायकम् एव। तदधीने ये कार्यं कुर्वन्ति ते तं भक्त्या गौरवेण प्रीत्या च पश्यन्ति। सः इदानीं सुखसागरे निमग्नः।

गच्छता कालेन ची गर्भवती जाता। युक्ते समये सा एकं सुन्दरं पुत्रं प्रसूतवती। बालकं द्रष्टुम् आगताः वदन्ति स्म– "एषः बालकः साधारणः न। एषः कस्याश्चित् देवतायाः अनुग्रहेण जातः अस्ति। एषः शतं वर्षाणि जीवन् जीवने अपूर्वं किमपि साधयिष्यति" इति।

तस्मिन् वर्षे हेमन्तऋतौ कदाचित् टोङ्ग् ची च एकस्यां रात्रौ पुत्रस्य भाविजीवनविषये सुदीर्घं चर्चितवन्तौ। टोङ्ग् प्रेमपूर्णया दृष्ट्या ची मुखं पश्यति। अद्य तस्याः सौन्दर्ये अपूर्वता दृश्यते स्म।

उषःकाले सा झटिति उत्थाय टोङ्गस्य हस्तं गृहीत्वा तं प्रेङ्खायाः समीपं नीतवती। काऽपि असामान्या घटना सम्भवति इति भावना उत्पन्ना टोङ्गस्य मनसि। सः जानु भूमौ स्थापयन् ची पुरतः उपविष्टवान्, क्षणकालं नेत्रे निमीलितवान् च।

यदा नेत्रे उद्घाटिते तदा अपूर्वसौन्दर्यशालिनी अन्या एव काचित् आकृतिः तस्य पुरतः आसीत्। तस्याः शरीरतः कान्तिरेखाः निस्सरन्ति स्म।

"टोङ्ग्! आवयोः वियोगस्य क्षणः सन्निहितः। वस्तुतः अहं मानवस्त्री न। भवदर्थम् अहं मानवरूपं धृतवती आसम्। भवतः पितृभक्त्या तुष्टः स्वर्गाधिपतिः मां भवत्समीपं प्रेषितवान्। तेन सूचितः अवधिः समाप्तः। अहम् इदानीं स्वर्गं प्रति गच्छामि। आवयोः प्रेम्णः प्रतीकरूपेण एषः शिशुः भवतः समीपे स्थास्यति" इति वदन्ती सा सुन्दरी मन्दं मन्दम् उपरि गच्छन्ती अदृश्या अभवत्।






कृष्णस्य दुष्टचेष्टाः दिने दिने वर्धन्ते। गोकुलवासिनः सर्वेऽपि तस्य पीडातः खिन्नाः सन्ति। कृष्णः यथा मनः रञ्जयति तथैव कष्टे अपि पातयति खलु? गोपाः तु कथञ्चित् तस्य पीडां सोढवन्तः। किन्तु गोपिकाः तूष्णीं स्थातुं न शक्तवत्यः। ताः परस्परं समालोच्य 'यशोदा एतद्विषये निवेदनीया' इति निश्चित्य यशोदायाः समीपं गतवत्यः। कृष्णेन कृतानि अकार्याणि वर्णयितुम् आरब्धवत्यः च।

चम्पा नाम गोपिका तीक्ष्णस्वरेण यशोदाम् उक्तवती– "पश्यतु भोः! भवत्याः पुत्रस्य दौष्ट्यम्। अपूर्वः पुत्रः प्रसूतः भवत्या! अस्मदादीनां किं पुत्राः न सन्ति? तादृशं दिनम् एकम् अपि नास्ति यद्दिने एषः अस्मान् पीडितवान् न स्यात्। एतं बालं मन्यमानाः वयं सर्वं मौनं सोढवत्यः। किन्तु इतःपरम् एतत् सोढुं न शक्यते। भवती अस्माकं नायकस्य पत्नी स्यात् नाम। किन्तु भवत्याः पुत्रेण क्रियमाणं सर्वं सोढव्यम् इति कोऽपि नियमः नास्ति। भवत्याः लालनेन एव एषः एवं जातः। एषः निश्शङ्कं सर्वेषां गृहं प्रविशति। सर्वं धूलिसात्कृत्य बहिः आगच्छति। भवती सर्वं जानती अपि मौनं तिष्ठति। किम् एतत् अन्याय्यम्?" इति।

अत्रान्तरे मालती नाम गोपिका अग्रे आगत्य कथयति– "भवत्याः प्रियपुत्रः अस्माकं गृहं प्रविष्टवान्। घटेषु स्थापितान् दधि-क्षीर-नवनीतादीन् किञ्चित् खादितवान्, शिष्टान् भूमौ पातितवान्। भवती एव वदतु, – एतां हानिं वयं कथं



गोपिका– "भगिनि! रोदनं मास्तु। रोदनेन कार्यं न सिध्यति" इति रमाम् उक्त्वा यशोदां प्रति वक्तुम् आरब्धवती– "अये यशोदे! इतःपरं भवती केवलं भवत्या प्रियपुत्रेण सह अस्मिन् ग्रामे निवसतु। वयं सर्वे इतः गमिष्यामः। अस्माकं जीवनम् असहनीयं सञ्जातम्। अहं मम गृहं कीलयित्वा गतवती आसम्। प्रत्यागत्य पश्यामि यत् द्वारम् उद्घाट्य भवत्याः पुत्रः दधि-घृतादिकं भूमौ स्थापयित्वा निर्गतः अस्ति। इदानीं किं तानि रिक्तानि पात्राणि अस्माकम् उदरं पूरयन्ति?" इति।

सहामहे? भवती इव वयं न धनिकाः। दधि-क्षीरादीनां विक्रयणेन एव अस्माकं जीवनं प्रचलति। दुष्टस्य भवत्याः पुत्रस्य कारणतः दधि-क्षीरादयः न खादनार्थं लभ्यन्ते, न वा विक्रयणार्थम्" इति।

तदा रमानामिका गोपिका अग्रे आगत्य– "महाराज्ञि! मम गृहे दधिघृतादीनां पात्राणि भूमौ न स्थाप्यन्ते। अहं सर्वम् अपि शिक्यायां स्थापितवती आसम्। तथापि भवत्याः पुत्रः एषः, स्वभावेन राक्षसः, गृहं प्रविश्य तानि पात्राणि पातितवान्। एतादृशं दुर्व्यवहारं कथं वा सहे ? प्रतिदिनम् अपि काऽपि द्रव्यहानिः भवति एव। इतःपरं गोकुलत्यागः एव शिष्टः मार्गः" इति उक्त्वा रोदनम् आरब्धवती।

सख्याः रोदनं श्रुत्वा कुपिता विजया नाम

तदा सरला नाम गोपिका समूहं विभिद्य अग्रे आगत्य यशोदायाः समीपे गर्जितवती– "अये, भवती कुतः वन्ध्या न जाता? शृणोतु, भवत्याः पुत्रस्य शौर्यगाथाम्। अहं दशसु पात्रेषु दधि-नवनीतादिकं पूरितवती आसम्। अद्य किञ्चित् धनं लभ्येत इति आशा आसीत्। एषः राक्षसः कृष्णः मम गृहं प्रविश्य यावच्छक्यं खादितवान्। दुष्टमित्रेभ्यः अपि यथाशक्ति दत्तवान्। शिष्टं भूमौ पातितवान्। एतावदेव न, तर्णकान् उन्मोच्य अपि गतवान्। मम पुत्राः अद्य किं पिबेयुः?" इति।

रत्ना नाम गोपिका दीनस्वरेण रुदती उक्तवती– "मम पतिः पुत्रादयः च बहुभ्यः दिनेभ्यः मिष्टखाद्यं कर्तुं प्रार्थयन्तः आसन्। अहं महता कष्टेन किञ्चित् धनसञ्चयं

कृत्वा तेन धनेन अद्य पायसादिकं कृतवती आसम्। एषः यशोदापुत्रः आगत्य सर्वं खादितवान्। न जाने, तस्य उदरे कीदृशः ब्रह्मराक्षसः निवसति इति। मम पतिः यदा आगच्छति तदा किम् अहं रिक्तं पात्रं प्रदर्शयेयम्? बालेभ्यः किं ददामि? यशोदे! भवती एव वदतु – मया किं करणीयम्?" इति।



अत्रान्तरे वाणी नाम गोपिका उच्चैः गर्जनं कुर्वती रुदती च उक्तवती– "एषः कृष्णः परह्यः मम गृहम् आगत्य नवनीतं चोरयित्वा गतवान्। ह्यः आगत्य दधिक्षीरादीन् पीत्वा पातयित्वा च उत्पातम् उत्पादितवान्। अद्य उषःकाले एव आगत्य तर्णकं विमोच्य मातुः क्षीरं पायितवान्। जीवनाधारभूतान् क्षीरनवनीतादीन् एव एषः नाशयति चेत् वयं कथं जीवेम? किं वा करवाम?" इति।

विशालाक्षी नाम अन्या गोपिका सशब्दं रुदती उक्तवती– "मम गृहे एषः दुष्टः कृष्णः प्रतिदिनं किमपि अकार्यं करोति एव। मम पतिः मम व्यवहारे संशयं प्रकटयति। 'अहं रहस्यरूपेण सर्वं विक्रीय कृष्णस्य उपरि अपराधम् आरोपयामि, रहस्यरूपेण धनं सञ्चिनोमि' इति सः आक्षिपति। मम तु जीवनम् एव असह्यकरं जातम्" इति।

एवं गोपिकाः एकैकशः कृष्णस्य दुष्टचेष्टाः वर्णितवत्यः। दधिक्षीरनवनीतादीन् चोरयति, मित्रेभ्यः वितरति, शिष्टं नाशयति इति तु सर्वासाम् आक्षेपः।

भक्ष्याणि कृष्णेन खादितानि, कृतं पाकं समग्रतया खादितवान् इति पुनः काश्चन आक्षिपन्ति। तर्णकान् उन्मोच्य क्षीरं पायितवान् इति अन्यासां कासाञ्चन आक्षेपः। सर्वाणि कार्याणि अमानुषानि एव! एवं विविधान् आक्षेपान् उक्त्वा गोपिकाः अन्ते उक्तवत्यः– "यशोदे! भवती प्रियपुत्रेण सह अत्र निवसन्ती राज्यशासनं करोतु। वयं सर्वे इतः निर्गच्छामः" इति।

गोपिकाभिः उच्यमानानि सर्वाणि वास्तविकानि, उत कल्पितानि इति यशोदायाः सन्देहः।



गोपिकानां निर्गमनानन्तरं यशोदा कृष्णम् उन्नीय लालयन्ती उक्तवती– "वत्स! अस्माकं गृहे दधि-क्षीर-नवनीतादीनां का न्यूनता, येन भवान् अन्येषां गृहं गत्वा चोरयेत्? अहं भवते यथेष्टं ददामि। प्रथमं भवान् किञ्चित् स्तन्यं पिबतु। मातुः क्षीरं गजबलं ददाति इति प्राचीनाः वदन्ति। भवान् सर्वत्र वृथा विवादम् उत्पादयति" इति।

अनन्तरं कृष्णाय क्षीरं पाययित्वा प्रीत्या आलिङ्ग्य मूर्ध्नि आघ्राय कपोलयोः चुम्बनं दत्त्वा उक्तवती– "प्रातः उत्थानान्तरं भवद्विषयकस्य आक्षेपस्य श्रवणेन एव मम दिनं गच्छति। भवतः दौष्ट्यस्य सीमा एव नास्ति। वक्ता प्रष्टा कोऽपि नास्ति भवतः। अतः एव एवम् आचरति भवान्। दुष्टस्य भवतः विषये दया सर्वथा अनुचिता" इति। अनन्तरं कृष्णस्य कटौ रज्जुं बद्ध्वा, रज्जोः अपरम् अन्तम् उलूखले बद्ध्वा वेत्रदण्डं प्रदर्शयन्ती– "इतः कुत्रापि यदि भवान् गच्छेत् तर्हि निर्दयं ताडयिष्यामि। अहम् अपि पश्यामि – इदानीं कथं दौष्ट्यम् आचरति इति" इति उक्त्वा गृहस्य अन्तः गत्वा कार्ये व्यापृता जाता।

यशोदा एकैकाम् अपि समाश्वासयन्ती उक्तवती– "भवतीनां या हानिः जाता ताम् अहं पूरयिष्यामि। किन्तु कयाचित् अपि गोकुलं न परित्यक्तव्यम्। भवतीभिः विना अहं कथं दिनं यापयेयम्? एषः अल्पः बालकः एतादृशानि कार्याणि कृतवान् इत्यत्र विश्वासः एव न भवति। तथापि भवतीभिः उच्यमानम् अस्तीत्यतः विश्वासः करणीयः। इतःपरम् अहं मम पुत्रं पूर्णतः नियन्त्रणे स्थापयिष्यामि। निश्चिन्ताः सत्यः भवत्यः गृहं गन्तुम् अर्हन्ति। इतःपरं कृष्णः भवतीनां गृहे उत्पातं न जनयिष्यति" इति। यशोदायाः आश्वासनेन शान्ताः ताः गोपिकाः स्वगृहं गतवत्यः।

कृष्णः किञ्चित्कालं मौनं स्थितवान्। अनन्तरं रज्जुम् आकर्षन् उलूखलं स्वसमीपम् आनीतवान्। ततः उलूखलं नोदयन् गोशालासमीपं नीतवान्। तत्र सालवृक्षद्वयं युगलरूपेण आसीत्। तत्पार्श्वे एषः उलूखलं



संस्थाप्य स्वयं तयोः मध्ये प्रविश्य अपरपार्श्वं प्राप्य बलात् उलूखलम् आकृष्टवान्। उभौ वृक्षौ महता शब्देन सह पतितौ।

वृक्षपतनशब्दं श्रुत्वा गोपिकाः तत्र आगतवत्यः। तां घटनां दृष्ट्वा भीताः सत्यः यशोदासमीपं गत्वा उक्तवत्यः– "भवत्याः पुत्रः मानवः न, अपि तु कोऽपि देवः एव। सः सालवृक्षम् उन्मूल्य आत्मनः उपरि पातितवान्। तम् उलूखले बध्द्वा भवती आत्मानं बुद्धिमतीं चिन्तितवती खलु? इदानीं पश्यतु, तेन किं प्रवृत्तम् इति। सः जीवति वा न वा इत्येव संशयः" इति।

एतत् श्रुत्वा दिग्भ्रान्ता यशोदा "हा हन्त!" इति आक्रन्दनं कुर्वती ततः धावितवती। गोपिकाः अपि विलपन्त्यः ताम् अनुसृतवत्यः।

अत्रान्तरे नन्दः अपि इतरैः गोपैः सह तत्र आगतवान्। मेघयोः मध्ये विराजमानः चन्द्रः इव पतितयोः वृक्षयोः मध्ये उपविश्य मन्दहासं प्रकटयन् कृष्णः तैः दृष्टः। नन्दः झटिति अग्रे गत्वा कृष्णस्य कटौ बद्धां रज्जुं विमोचितवान्, कृष्णम् उन्नीतवान् च। अनन्तरं सः पृष्टवान्– "एतादृशी बलवती रज्जुः केन बद्धा? उलूखलम् आकर्षन् एषः एतावद्दूरं कथम् आगतवान्? कथम् एतौ वृक्षौ पतितौ? किम् एतत् प्रवर्तते?" इति।

तदा यशोदा उक्तवती– "मया एव एषः उलूखले बद्धः आसीत्" इति। प्रवृत्तं सर्वं निवेदितवती च। नन्दः पुत्रस्य सामर्थ्यविषये आश्चर्यम् अनुभवन् तं प्रीत्या आलिङ्गितवान्।

वृद्धाः गोपाः एतस्याः घटनायाः आन्तर्यं ज्ञातुं न शक्नुवन्ति। ते परस्परं वदन्ति– "एतत्सन्दर्भे कोऽपि झञ्झावातः न उत्पन्नः। अशनिपातः न जातः। गजः कोऽपि न आगतः। सेना काऽपि एतेन मार्गेण न गता। एवं तर्हि एतौ महावृक्षौ कथं पतितौ? अल्पः बालः महावृक्षौ कथं पातयेत्? इतोऽपि अधिकः उत्पातः कः स्यात्? इतःपूर्वम् अपि एवम् एव जातम्। महाराक्षसी एतस्य बालस्य हस्तात् मृता। महाशकटः एतेन भञ्जितः। इतःपरम् अपि एतस्मिन् ग्रामे निवासः

क्लेशाय एव। किन्तु वयम् अत्रैव जाताः, अत्रैव प्रवृद्धाः। एतस्मिन् वार्धक्ये एतं ग्रामं त्यक्त्वा कुत्र वा गच्छेम?" इति। एवं वदन्तः ते स्वगृहं गतवन्तः। गोपिकाः अपि ततः निर्गतवत्यः।



दिनानि अतीतानि। बलरामः अष्टवर्षीयः, कृष्णः च सप्तवर्षीयः जातः। तौ इतरैः गोपालकैः सह क्रीडन्तौ धावने तर्णकैः सह स्पर्धमानौ दिने दिने प्रवर्धतः। भयस्य नाम एव तौ न जानीतः। हस्ते क्रीडासाधनानि गृहीत्वा, पादुके धृत्वा इतरैः गोपैः सह तौ सर्वत्र अटतः। कृषिक्षेत्रेषु तेषां कोलाहलः प्रचलति। एतत् श्रुत्वा वृकादयः दुष्टमृगाः दूरं पलायन्ते। एते गोपबालाः गीतं गायन्तः अटन्ति। लीलया वृक्षारोहणं कुर्वन्तः क्रीडन्ति। मधुमक्षिकाः अनुसृत्य गत्वा मधु पिबन्ति। तेषां तत् बाल्यजीवनम् अतीव मधुरम् आसीत्।

एकदा कृष्णः बलरामम् उक्तवान्– "अग्रज! वयम् अत्रैव जाताः, प्रवृद्धाः च। गोपानां गोसमूहस्य च एकत्र चिरकालं स्थितिः अनुचिता खलु? इदानीम् अत्र पश्यतु, शाद्वलाः प्रायशः रिक्ताः, इन्धनार्थं वृक्षाः अस्माभिः स्वेच्छया कर्तिताः, कूप-कासारादयः पङ्कमयाः जाताः। शाकादीनां वर्धनं दुष्करं जातम्। पानजलार्थं सुदूरं गन्तव्यम् आपतितम्। अतः अस्माभिः एतं प्रदेशं त्यक्त्वा कुतो वा वृन्दावनं प्रति न गन्तव्यम्? मया श्रुतं यत् तत् एकं सुन्दरं वनम् इति। तत्र गोवर्धनपर्वतः अस्ति। पर्वतस्य उपरि भाण्डीरनामकः महावटवृक्षः अस्ति। वृन्दावनस्य पार्श्वे कालिन्दी अपि सदा प्रवहति। अतः तत्र गमनम् एव वरम्। वृद्धाः गोपाः एतस्य स्थलस्य त्यागार्थं न सिद्धाः। तदर्थम् एकम् उपायं करोमि, पश्यतु" इति।

अनन्तरं कृष्णस्य देहतः शतशः वृकाः उत्पन्नाः। ते समूहरूपेण ग्रामे सञ्चारम् आरब्धवन्तः। गोपाः भीताः। गावः भीत्या आक्रन्दनं कृतवत्यः। तेषां वृकानां मारणं दुःशकम् आसीत्। ते वृकाः रक्षकान् कथञ्चित् वञ्चयित्वा तर्णकान् अपहृत्य

नयन्ति स्म। एतावदेव न, ग्रामे रात्रौ व्याघ्राणां गर्जनं, सिंहानां सञ्चारध्वनिः च श्रूयते। सूकरैः निर्मिताः गर्ताः मार्गे दृश्यन्ते!

एताः घटनाः दृष्टवतां वृद्धगोपानाम् आतङ्कः प्रवृद्धः। अग्रे किं करणीयम् इति समालोचनम् आरब्धवन्तः। गोकुले निवासः तु असम्भवः एव आसीत्। व्यामोहकारणतः गोकुलं त्यक्तुम् अपि ते न इच्छन्ति। अतः तेषां मनसि इदानीं द्वन्द्वभावः।

तदा एकः वृद्धः गोपः उक्तवान्– "वृन्दावनम् अत्यन्तं सुन्दरः प्रदेशः इति श्रूयते। सर्वे तस्य प्रदेशस्य प्रशंसां कुर्वन्ति। किन्तु एतत् अपि श्रूयते यत् तत्र राक्षसाः निवसन्ति इति। अतः तत्र गन्तुं मनः न उत्सहते। जलात् उद्गतस्य अग्नौ पतनं न भवेत् खलु? किन्तु इतः तु गन्तव्यम् एव। प्रतिदिनम् अत्र उत्पाताः प्रचलन्ति। सदा अपि प्राणवियोगभीतिः" इति।

सर्वे एवं चर्चां कुर्वन्तः आसन्। तदा तत्र नारदमहर्षिः आगतवान्। सः नन्दम् एकान्ते आहूय उक्तवान्– "नन्द! भवन्तः वृन्दावनगमनं चिन्तयन्तः सन्ति। किन्तु तत्र राक्षसाः सन्ति इति भवतां भीतिः। भवन्तः कृष्णस्य सामर्थ्यं न जानन्ति। सः साधारणः मानवः न। दुष्टरक्षणार्थं भूलोकम् आगतः नारायणः एव सः। बलरामे अपि नारायणस्य अंशाः सन्ति। कृष्णस्य संहारार्थं राक्षसी पूतना आगतवती। अन्ये राक्षसाः शकटे सालवृक्षे च आत्मानं गोपयित्वा स्थितवन्तः। किन्तु परिणामः कः जातः? ते एव कृष्णेन संहृताः अभवन्। भवन्तः एताः घटनाः स्वयं दृष्टवन्तः। अतः इतःपरम् अपि सन्देहः मास्तु। गोसमूहेन सह सर्वे वृन्दावनं गच्छन्तु। सर्वेषां हितं सिध्यति" इति।

अनन्तरं नारदः कृष्णम् अपि दृष्ट्वा एतत् एव उक्त्वा ततः निर्गतवान्। अनन्तरं नन्दः अन्यान् गोपान् उक्तवान्– "वृन्दावनगमनं यत् निश्चितं तत्र परिवर्तनं मास्तु। सर्वे धैर्येण गच्छेम। कस्यापि मनसि काऽपि भीतिः मास्तु। गमनार्थं सन्नाहः भवतु" इति।






# दानस्वीकारः

विलासपुरे वैभवः नाम वणिक् आसीत्। सः वाणिज्येन यथेष्टम् ऐश्वर्यं सम्पादितवान् आसीत्। कदाचित् सः घोरेण व्याधिना पीडितः अभवत्। वैद्यस्य औषधोपचारः व्यर्थः जातः। रोगः दिने दिने वर्धमानः दृश्यते।

एकदा वैभवः वैद्यम् उक्तवान्– "श्रीमन्! धनसम्पादनार्थं मया कृतानि पापानि एव माम् इदानीं व्याधिरूपेण बाधन्ते इति अहं भावयामि। अतः एव भवता दत्तानि औषधानि निष्प्रयोजकानि जातानि। मरणानन्तरं मम नरकप्राप्तिः निश्चिता इति चिन्ता एव मां सदा बाधते" इति।

इदानीं वैद्यः ज्ञातवान् यत् वैभवः मानसिकरोगेण पीडितः अस्ति, अतः एव सर्वाणि औषधानि निष्प्रयोजकानि जातानि इति।

सः वैभवे धैर्यं पूरयन् उक्तवान्– "भवान् चिन्तां न करोतु। भवतः पापानि यथा पूर्णतः क्षालितानि भवेयुः तथा किमपि पुण्यकार्यं भवतः द्वारा कारयिष्यामि। तदा औषधानि अपि सत्परिणामं जनयन्ति" इति।

विलासपुरे राजेन्द्रः नाम कश्चन निर्धनः कृषिकः आसीत्। सः पत्नीपुत्राणां पोषणार्थं श्रद्धया कृषिक्षेत्रे कार्यं करोति। किन्तु तस्य दैवं विपरीतम् इत्यतः प्रतिवर्षं सः शस्यसङ्ग्रहणकाले हानिम् अनुभवति। एकस्मिन् वर्षे वृष्टिकारणतः हानिः, अपरस्मिन् वर्षे अग्नेः कारणतः धान्यराशिः दग्धः। अन्यस्मिन् वर्षे चौर्येण महती हानिः। अतः सः ऋणेन जीवनं कथञ्चित् यापयन् अस्ति।

वैद्यः एतत् सर्वं पर्यालोच्य मनसि निर्णीतवान् यत् वैभवस्य हस्ततः राजेन्द्राय

किमपि दापनीयम् इति। अतः सः राजेन्द्रं वैभवस्य समीपं नीत्वा उक्तवान्– "अपात्रे दत्तं व्यर्थम् एव। एषः तु सज्जनः सङ्कटे अस्ति अपि। एतस्मै दानेन भवान् महत् पुण्यं सम्पादयिष्यति" इति।

वैभवः राजेन्द्रस्य आर्थिकीं परिस्थितिम् आद्यन्तं श्रुतवान्। अनन्तरं धनधान्यादिकं च तस्मै दत्तवान्। एतेन वैभवस्य पापशङ्का अपगता। वैद्येन दत्तानि औषधानि इदानीं प्रयोजनकारीणि अभवन्। सप्ताहाभ्यन्तरे वैभवः पूर्णतः स्वस्थः जातः।

एषा वार्ता वैभवद्वारा वैद्यद्वारा च समग्रे ग्रामे प्रसृता अभवत्। ग्रामीणाः परस्परं वक्तुम् आरब्धवन्तः– "वयम् अपि तदा तदा यथाशक्ति दानं कुर्मः एव। किन्तु एतादृशः अपूर्वः परिणामः कदापि न दृष्टः। राजेन्द्रे प्रायः किमपि वैशिष्ट्यम् अस्ति। अतः एव वैभवः शीघ्रतया स्वस्थः जातः" इति।

राजेन्द्रः अपि जनेषु श्रूयमाणाम् एतां वार्तां श्रुतवान्। एतस्य उपयोगः स्वीकरणीयः इति चिन्तयित्वा सः स्वयं स्वविषये सर्वत्र वक्तुम् आरब्धवान्। 'स्वविषये अपि कदाचित् अपूर्वा घटना सम्भवेत्' इति चिन्तयन्तः जनाः राजेन्द्राय किमपि दातुम् आरब्धवन्तः। काकतालीयन्यायेन केचन एवं करणेन लाभम् अपि प्राप्तवन्तः। अतः 'राजेन्द्रे कापि अपूर्वा शक्तिः अस्ति' इति वार्ता ग्रामे प्रसृता।

इदानीं राजेन्द्रः परिश्रमं विना एव सुखेन जीवति। सः पार्श्वग्रामादिकम् अपि कदाचित् गच्छति। आत्मनः अपूर्वां शक्तिं ख्यापयन्



दानं प्राप्नोति।

"आर्य! तृष्णावशंगतः भवान् इदानीं भिक्षुकः संवृत्तः। इदानीम् अस्मासु काऽपि न्यूनता नास्ति। अतः वयं यथापूर्वं कृषिकार्येण एव जीवननिर्वहणं करवाम" इति उक्तवती राजेन्द्रस्य पत्नी कान्ता।

"यदा वयं परिश्रमेण जीवन्तः आस्म तदा प्रतिदिनम् अपि अश्रुविमोचनम् आसीत् खलु? इदानीम् एषः मार्गः दैवेन एव प्रदर्शितः। अत्र एव अस्माकं सुखम् अस्ति" इति उक्तवान् राजेन्द्रः।

पत्युः वचनम् अनङ्गीकुर्वती कान्ता उक्तवती– "वयं यदा कष्टपरिस्थितौ आस्म तदा वैभवः अस्मभ्यं दानं कृतवान्। तेन सः स्वस्थः जातः। इदानीं तु अस्माकं तादृशी परिस्थितिः नास्ति। सर्वाणि आनुकूल्यानि सन्ति एव। अतः इदानीम् अस्मभ्यं यः दानं करोति सः पुण्यफलं न प्राप्स्यति। एषा वस्तुस्थितिः ग्रामस्थैः यदा ज्ञायते तदा ते दानं स्थगयन्ति। तदा अस्माकं का वा गतिः? भवान् तु महान् अलसः सञ्जातः। यस्मिन् आलस्यपिशाचः प्रविष्टः तस्य सर्वनाशः एव भविष्यति" इति।

राजेन्द्रः तस्याः वचनं सर्वथा निर्लक्षितवान्। यथापूर्वं दानं स्वीकुर्वन् आलस्येन जीवनं यापयति सः।

एवं स्थिते कदाचित् सः राजेन्द्रः स्वयं व्याधिग्रस्तः जातः। ग्रामे एषः सम्प्रदायः जातः आसीत् यत् यः रोगपीडितः भवति सः राजेन्द्राय किमपि ददाति। अनन्तरम् औषधं



सेवते च। द्वन्द्वे पतितः राजेन्द्रः वैद्यं स्वगृहम् आनाय्य स्वव्यथां निवेद्य पृष्टवान्– "वैद्यमहोदय! इदानीम् अहं कस्मै दानं दद्याम्?" इति।

किम् उत्तरं वक्तव्यम् इति चिन्तयन् आसीत् वैद्यः। तदा राजेन्द्रस्य पत्नी कान्ता वैद्यम् अन्तः आहूय एकान्ते उक्तवती– "पूर्वम् एषः श्रमशीलः आसीत्। श्रमे सुखं पश्यति स्म अपि। किन्तु भवत्कारणतः सः दानार्थं हस्तं प्रसारितवान्। क्रमशः याचकः जातः अपि। मया बहुधा उक्तम्। तथापि सः याचनेन एव जीवनं यापयितुम् इच्छति। आलस्यकारणतः एव एषः इदानीम् अस्वस्थः जातः। अतः औषधोपचारेण सह मनसः अपि चिकित्सां करोतु कृपया" इति।

वैद्यः आत्मना कृतस्य कार्यस्य दुष्परिणामं स्मरन् राजेन्द्रसमीपं गत्वा उक्तवान्– "भोः! दानरूपेण दातुं भवतः समीपे किम् अस्ति? दानमात्रेण पुण्यं न लभ्यते अपि। पूर्वं वैभवः भवते यत् दानं दत्तवान् तेन भवतः आपत् परिहृता। तेन सः पुण्यं सम्पादितवान् स्वस्थः जातः च। निरन्तरदानस्वीकारेण भवतः समीपे स्थितानि पुण्यानि समाप्तानि। अतः भवान् इदानीम् अस्वस्थः जातः। अहम् इदानीं भवतः रोगं निवारयिष्यामि। किन्तु इतःपरं भवता अनावश्यकं दानं न स्वीकरणीयम्। धनदात्रे विनिमातुं पुण्यस्य अभावात् भवतः समीपे पापसञ्चयः भवति। तत्कारणतः प्राप्यमाणः रोगः तु प्राणान्तिकः भवेत्" इति।

वैद्येन उक्तं श्रुतवतः राजेन्द्रस्य शरीरे कम्पनम् उत्पन्नम्। सः तद्दिने एव निश्चितवान् यत् इतःपरम् अनावश्यकं दानं न स्वीकरणीयं, यथापूर्वं परिश्रमश्च करणीयः इति।

वैद्यस्य औषधोपचारेण राजेन्द्रः अल्पे एव काले स्वस्थः जातः। अनन्तरं सः दानस्वीकारं निराकुर्वन् परिश्रमेण जीवनम् आरब्धवान्। दैवसहयोगतः अग्रे धनसम्पन्नः जातः अपि।





# विषवृक्षः

वैतरणीराज्यं कूर्मवर्मा नाम राजा पालयति स्म। तस्य पुत्रः राजदेवः। राजवर्मा यदा प्राप्तवयस्कः जातः तदा कूर्मवर्मा पुत्रस्य स्कन्धे राज्यभारम् आरोप्य स्वयं राजकार्यतः निवृत्तः जातः।

एकदा राजदेवः एकान्ते उपविश्य स्ववंशस्य चरित्रं पठन् आसीत्। तत्र एकत्र एवं लिखितम् आसीत्—

'वैतरण्याः उत्तरे अरण्ये एकः विषवृक्षः अस्ति। सः विषवृक्षः चेदपि तस्य विशेषसामर्थ्यं यत् यः तस्य अधः स्थित्वा यं रूपम् इच्छति तत् सः प्राप्स्यति। एतस्य साहाय्येन बहवः राजानः प्रजानां दुःखं निवारितवन्तः। राज्यं सुभिक्षं कृतवन्तः च। अतः एव एतस्य रहस्यं गोपितम् अस्ति' इति।

एतस्य पठनानन्तरं राजदेवः दशदिनानां परिश्रमेण तं विषवृक्षम् अन्विष्टवान्। वृक्षस्य अधः स्थित्वा सेनापतेः रूपम् इष्टवान्। तत्क्षणे तस्य रूपं सेनापतिरूपेण परिवृत्तम्। पुनः सः मन्त्रिणः रूपम् इष्टवान्। तदपि तत्क्षणे प्राप्तम् एव।

'एतस्य महिमान्वितस्य वृक्षस्य साहाय्येन पूर्वजैः इव मया अपि प्रजाहितसाधनपूर्वकं कीर्तिः सम्पादनीया' इति निश्चित्य राजदेवः पुनः अपि स्वकीयं रूपं प्राप्य प्रासादं प्रत्यागतवान्।

अनन्तरदिने यदा सः राजोद्याने आसीत् तदा सैन्याधिकारिणः पत्नी आगत्य उक्तवती— "दिनद्वयतः मम पुत्राः भोजनम् एव न कृतवन्तः। पित्रा सह भोजनं तेषाम् अभ्यासः" इति।

दिनद्वयतः पूर्वं सीमाप्रान्तस्य सैन्यबलस्य परिशीलनार्थं राजदेवः एव सेनापतिं प्रेषितवान् आसीत्। सेनापतिपत्न्याः वचनं

"भामहः"



श्रुत्वा राजा अरण्यस्थं तं महिमान्वितं वृक्षं स्मृतवान्। अतः सः– "भवती चिन्तां न करोतु। अद्य श्वः वा सः प्रत्यागमिष्यति" इति उक्त्वा तां प्रेषितवान्।

ततः राजदेवः विषवृक्षस्य अधः स्थित्वा सेनापतिरूपं प्राप्य सेनापतिगृहं गतवान्।

पितुः रूपेण आगतं राजदेवं दृष्ट्वा सेनापतिपुत्राः सर्वे सन्तुष्टाः।

"भवतः अनुपस्थित्या सर्वे उपवासम् आचरितवन्तः" इति वदन्ती सेनापतिपत्नी सर्वेभ्यः भोजनं परिविष्टवती।

बालकानां पार्श्वे उपविश्य सेनापतिवेषधारी राजदेवः भोजनम् आरब्धवान्।

तत्समये एव वास्तविकः सेनापतिः कार्यं समाप्य प्रत्यागतवान्। स्वप्रतिरूपेण स्थितं दृष्ट्वा क्रुद्धः सः– "कः भोः भवान् वञ्चकः?" इति वदन् दण्डेन सम्यक् ताडितवान्।

एतानि ताडनानि सोढुम् अशक्तः महाराजः वेदनया आक्रन्दनं कुर्वन् वस्तुस्थितिं निवेद्य मूर्च्छां गतवान्। दशदिनानाम् अनन्तरम् एव सः यथापूर्वं स्वस्थः जातः।

एकदा राजदेवः प्रजानां योगक्षेमं द्रष्टुम् इच्छन् वेषान्तरेण नगरसञ्चारार्थं गतवान्। तदा सः कस्माच्चित् गृहतः उच्चैः श्रूयमाणं पतिपत्न्योः सम्भाषणं श्रुतवान्।

"एतस्याः समवयस्काः बालिकाः पतिगृहे सुखेन निवसन्ति। अस्माकं पुत्री तु पितृगृहे एव दिनानि गणयति। इतोऽपि कियत्कालम् एवं भवेत्?" इति उक्तवती पत्नी कोपमिश्रितेन दुःखेन।

तदा पतिः उक्तवान्– "किमर्थं सदा एवं पीडयति? सः देवकुमारः आगच्छतु। क्षणाभ्यन्तरे एतस्याः विवाहं समापयिष्यामि" इति।

राजदेवः ततः अन्यं मार्गं गतवान्। तत्र कस्यचित् वणिजः गृहात् सम्भाषणं श्रूयते स्म। समीपं गत्वा तदपि श्रुतवान् राजा।

वणिजः पुत्रः पितरम् पृष्टवान्– "यावत् सः देवकुमारः न प्रत्यागच्छेत् तावत् किम् अस्माभिः तूष्णीं स्थातव्यम्? वाणिज्यं किं

स्थगनीयम्?" इति।

"किं कुर्मः भोः! दैवस्य वैपरीत्यम्। तस्य आगमनम्, अस्माकं कष्टस्य अपगमनम् एतत् उभयम् अपि असम्भवम् एव इति अहं भावयामि" इति निराशया उक्तवान् वणिक्।

एतत् श्रुत्वा राजदेवः आलोचितवान्— 'तस्य देवकुमारस्य प्रत्यागमनेन परिवारद्वये समस्या परिहृता भविष्यति। अतः मया एव कुतो वा देवकुमारस्य रूपं न धरणीयम्?' इति।

राजदेवः साक्षात् विषवृक्षस्य समीपं गतवान्। देवकुमारस्य रूपं धृत्वा प्रत्यागतवान् च।



देवकुमारसम्बन्धि प्रकरणम् एवम् आसीत्— देवकुमारः कश्चन समुद्रवणिक्। तस्य समीपे धनसङ्ग्रहः कोऽपि न आसीत्। चन्द्रभानुनामकः गृहस्थः स्वपुत्र्याः अश्विन्याः विवाहस्य निमित्तं दश सहस्रं रूप्यकाणि सङ्गृह्य स्थापितवान् आसीत्। अधिकवृद्धेः आशां प्रदर्श्य चन्द्रभानुतः तत् धनम् ऋणरूपेण स्वीकृतवान् देवकुमारः। वस्तूनि नौकायाम् आरोप्य द्वीपान्तरं गतवान् सः वाणिज्ये महतीं हानिम् अनुभूय रिक्तहस्तः सञ्जातः। केन मुखेन सः प्रत्यागच्छेत्? धनं प्रतिपृच्छतः किम् उत्तरं वदेत्? अतः सः द्वीपान्तरे एव निवसन् कयाचित् लघुवृत्त्या जीवनं यापयन् आसीत्।

राजदेवः वणिजः गृहं गतवान्, द्वारशब्दं कृतवान् च। द्वारम् उद्घाटितवन्तं वणिजं देवकुमाररूपी राजदेवः स्नेहेन पृष्टवान्— "श्रीमन्! सर्वे कुशलिनः खलु भवन्तः?" इति।

देवकुमारस्य परिचयं प्राप्य सः वणिक् तम् अन्तः आहूतवान्। तत्र पितापुत्रौ तस्य हस्तौ बद्ध्वा सम्यक् ताडयन्तौ उक्तवन्तौ— "अस्मत्तः नीतानां वस्तूनां मूल्यं वृद्धिसहितम् एतत्क्षणे एव प्रत्यर्पयत्" इति।

राजदेवस्य मुखं विवर्णं जातम्। अत्रान्तरे वणिजः पुत्रः गत्वा चन्द्रभानुं तत्र आनीतवान्।

चन्द्रभानुः प्रवेशसमनन्तरम् एव राजदेवं मुष्ट्या प्रहरन् गर्जितवान्— "नयवचनैः



भवान् पुत्र्याः विवाहनिमित्तं मया सङ्गृहीतानि दशसहस्रं रूप्यकाणि वशीकृतवान्। भवत्कारणतः अद्यावधि मम पुत्र्याः विवाहः न जातः। गच्छाम तावत् महाराजसमीपम्। सः एव युक्तं निर्णीय श्रावयतु" इति। अनन्तरं ते राजभवनं गतवन्तः।

मन्त्री तेषां वचनानि श्रुत्वा उक्तवान्— "इदानीं महाराजः अस्वस्थः अस्ति। युवराजः राजदेवः बहिः कुत्रापि गतवान्। अतः इदानीम् एतम् अपराधिनं कारागारे स्थापयिष्यामि" इति। अनन्तरं सः तं कारागारे स्थापयितुं सेवकान् आदिष्टवान्।

कारागारे स्थितः राजदेवः रक्षकभटं बहुधा सम्प्रार्थ्य मन्त्रिणं स्वसमीपम् आनायितवान्। प्रवृत्तं सर्वं निवेद्य कारागारतः विमुक्तः अभवत् च।

केचन मासाः अतीताः। राजभवने विचित्ररीत्या चौर्यम् आरब्धम्। कदाचित् कोषागारस्थं लक्षशः धनं चोरितम्। पुनः कदाचित् राज्ञ्याः अमूल्यानि आभरणानि चोरितानि।

चोरस्य ग्रहणे सर्वे यदा असमर्थाः जाताः तदा राजदेवः एव एतदर्थं स्वयं प्रस्थितवान्। रात्रौ शुनकरूपं धृत्वा दुर्गस्य मुखद्वारस्य समीपे रक्षणार्थं स्थितवान् च। तदा कश्चन चोरः महता वस्तुग्रन्थिना सह तत्र आगतवान्। राजदेवः भषन् तम् अनुसृतवान्। सः चोरः शुनकं सम्यक् ताडयित्वा अग्रे पलायितवान्।

तथापि शुनकरूपी राजदेवः गन्धेन एव मार्गं जानन् तम् अनुसृतवान्। चोरः सेनापतिगृहं प्रविष्टवान्। चोररूपं परित्यज्य सेनापतिरूपेण गृहस्य पुरतः आगत्य स्थितवान् च।

'सेनापतिः विषवृक्षस्य माहात्म्यं जानन् तस्य दुरुपयोगं स्वीकुर्वन् अस्ति' इति ज्ञातवान् राजदेवः। सः शुनकरूपं परित्यज्य युवराजवेषं धृतवान्। भटद्वारा सेनापतिं कारागारे स्थापितवान्। प्रवृत्तं सर्वं पितरं निवेदितवान् च।

तदा राजा उक्तवान्— "सः विषवृक्षः

दुष्परिणाममेव फलति। अतः तं वृक्षम् अद्य एव छेत्तुम् आज्ञापयतु" इति।

तदा राजदेवः उक्तवान्– "स च वृक्षः पूर्वजैः सम्यक् पालितः। अतः कालान्तरे वा सः सत्फलं दद्यात् एव। अन्ये तस्य वृक्षस्य समीपं यथा न गच्छेयुः तथा रक्षणव्यवस्थां करवाम वयम्" इति।

कूर्मवर्मा एतत् अङ्गीकृतवान्। तद्दिनतः एव तस्य वृक्षस्य रक्षणार्थं विशेषव्यवस्था कृता।



एकमासानन्तरं महाराज्ञी कदाचित् असह्यया शिरोवेदनया पीडिता जाता। आस्थानवैद्यः तां परीक्ष्य उक्तवान्– "महाराज! एतस्याः चिकित्सार्थम् औषधसज्जीकरणे काष्ठविक्रेतुः रामदासस्य साहाय्यम् आवश्यकम्। यतः सः एकः एव अपेक्षितं मूलं जानाति, न अन्ये, न तु अहम् अपि" इति।

राजदेवः रामदासस्य अन्वेषणार्थं भटान् सर्वत्र प्रेषितवान्। किन्तु सः कुत्रापि न दृष्टः। अन्ते खिन्नः राजदेवः विषवृक्षस्य साहाय्येन रामदासस्य रूपं धृत्वा राजवैद्यस्य सम्मुखे आगत्य स्थितवान्।

तं राजवैद्यः उक्तवान्– "भोः रामदास! भवान् देवपत्रवृक्षं जानाति खलु? तस्य मूलम् इदानीम् आवश्यकम्। तेन महाराज्ञयाः निमित्तम् औषधं सज्जीकरणीयम्" इति।

राजदेवः अरण्यं गत्वा देवपत्रवृक्षम् अन्विष्टवान्। किन्तु लक्षणस्य अस्पष्टज्ञानात् सः तं वृक्षं न प्राप्तवान्। वैद्यः अपि प्रत्यक्षतः तं वृक्षं न जानाति।

अत्रान्तरे अन्या एका घटना प्रवृत्ता। यदा राजदेवः कारागारे आसीत् तदा मन्त्री तन्मुखात् विषवृक्षस्य माहात्म्यं ज्ञातवान् आसीत्। तद्दिनतः मन्त्रिणः मनसि एकः एव विचारः– मया कथञ्चित् राजपदवी प्राप्तव्या इति। अतः सः वृक्षरक्षकान् वशीकृत्य स्वयं युवराजवेषं धृतवान्। 'इतःपरं कोऽपि रूपपरिवर्तनं प्रप्तुं यथा न शक्नुयात् तथा कर्तुम् एषः वृक्षः नाशनीयः' इति सः आलोचितवान्। अतः वृक्षस्य छेदनार्थं सेवकान् आदिष्टवान् अपि।

किन्तु कोऽपि भटः वृक्षस्य छेदनार्थं सिद्धः न जातः। "महिमान्वितस्य वृक्षस्य छेदनं कृतं चेत् अनिष्टम् अस्मान् बाधते। अतः एतत्कार्ये मां न नियोजयतु महाप्रभो!" इति ते सर्वे उक्तवन्तः।

"तर्हि अत्र समीपे कोऽपि वृक्षच्छेदकः अस्ति चेत् तम् आनयन्तु" इति आदिष्टवान् युवराजवेषधारी मन्त्री।

भटाः ततः गत्वा काष्ठच्छेदकवेषे स्थितं युवराजं तत्र आनीतवन्तः। सः अपि वृक्षच्छेदनं निराकृतवान्।

"मम आज्ञां तिरस्कुर्वतः भवतः कियत् धार्ष्ट्यम्?" इति कोपेन वदन् युवराजवेषधारी मन्त्री कशया तं ताडयितुं सेवकान् आदिष्टवान्।

भटाः ताडनार्थं कशाम् उन्नीतवन्तः तदा सः काष्ठविक्रेतृवेषेण स्थितः युवराजः वृक्षच्छेदनम् अङ्गीकृतवान्। अल्पे एव काले वृक्षम् अधः पातितवान्। भटाः तस्य वृक्षस्य विदारणं कृत्वा अग्निस्पर्शं कृतवन्तः। अपरक्षणे युवराजः निजवेषेण तत्र स्थितवान्। एतत् दृष्ट्वा मन्त्री ततः पलायितवान्। भटाः युवराजस्य पादयोः प्रणम्य क्षमां प्रार्थितवन्तः।

राजभवनं प्रत्यागतः राजदेवः मन्त्रिणः द्रोहयुक्तं व्यवहारं वृक्षनाशनवार्तां च महाराजाय निवेदितवान्।

राजा प्रवृत्तं सर्वं श्रुत्वा राजदेवम् उक्तवान्— "भोः! अस्माकं वंशचरित्र सम्बद्धानि ताडपत्राणि भवता दृष्टानि इत्यतः एवम् अनर्थपरम्परा घटिता। अतः तानि ताडपत्राणि कुत्रापि रहसि स्थापयतु। तथैव काष्टविक्रेतारं रामदासम् अन्विष्य मातुः चिकित्सार्थं व्यवस्थां करोतु" इति।

एताभिः घटनाभिः राजदेवे विवेकः उदितः। सः मन्त्रतन्त्रादिषु विशेषासक्तिं परित्यज्य स्वशक्तेः उपरि विश्वासं स्थापयन् स्वकर्तव्ये निरतः जातः। अतः पितुः मरणानन्तरं सः 'समर्थः राजा' इति कीर्तिं सम्पादितवान्।






# अविवेकिता

कस्मिंश्चित् ग्रामे सोमनाथः नाम वृद्धः निवसति स्म। सः तृणानि विक्रीय धनं सम्पाद्य तेन जीवति स्म। एकदा वृद्धः सोमनाथः पर्वतसमीपं गतवान्। पत्न्या दत्तं पृथुकानां ग्रन्थिं वृक्षस्य शाखायां स्थापयित्वा तृणकर्तने प्रवृत्तः।

किञ्चित्कालानन्तरं सः श्रमनिवारणार्थं वृक्षस्य छायायाम् उपविष्टवान्। अत्रान्तरे तत्र कश्चन वानरसमूहः आगतः। ते वानराः वृक्षशाखायां स्थापितं तं पृथुकग्रन्थिं स्वीकृतवन्तः। ग्रन्थिस्थान् पृथुकान् इतस्ततः विकिरन्तः खादितवन्तः।

वृद्धः सोमनाथः एतत्सर्वं पश्यन् अपि मौनं स्थितवान्। वानराः किञ्चित्कालं तस्य पुरतः आगत्य 'किस्, पिस्' इति ध्वनिम् उत्पादितवन्तः। अनन्तरं तं मूर्तिं मन्यमानाः उन्नीतवन्तः। समीपस्थस्य मन्दिरस्य सोपानमार्गे उपवेशितवन्तः च।

एतंदनन्तरं ते वानराः ततः निर्गत्य अल्पे एव काले प्रत्यागतवन्तः। तेषां मुष्टौ नाणकानि आसन्। तानि नाणकानि सोमनाथस्य पुरतः राशीकृत्य ते ततः दूरं गतवन्तः।

एतावत्पर्यन्तं सोमनाथः नेत्रे निमील्य विना कम्पनं स्थितवान् आसीत्। किञ्चित् चिन्तनानन्तरं सः एवं निर्णीतवान्– 'मार्गे गन्तारः जनाः मन्दिरस्य पुरतः नाणकानि क्षिप्त्वा गच्छन्ति खलु? तानि नाणकानि एते वानराः मानवाः इव सङ्गृहीतवन्तः। इदानीं मम पुरतः स्थापितवन्तः' इति।

वानराणां निर्गमनानन्तरं तेषां चेष्टाः स्मरन् सोमनाथः मनसि एव हसितवान्। दैवयोगात् अद्य तस्य भाग्यं फलितम्। सोमनाथः सर्वाणि नाणकानि स्वीकृत्य गृहं प्रति प्रस्थितवान्। मार्गे सः विपणिं गत्वा नूतनानि वस्त्राणि क्रीतवान्। गृहम् आगत्य

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

अवशिष्टानि नाणकानि पत्न्याः हस्ते समर्प्य मिष्टखाद्यं निर्मातुं सूचितवान्।

नूतनवस्त्राणि धृत्वा सोमनाथः तस्य पत्नी शीला च भोजनार्थम् उपविष्टवन्तौ। तदा कमला नाम वृद्धा प्रतिवेशिनी तत्र आगतवती। आश्चर्येण पृष्टवती च– "अये भगिनि! भवत्याः गृहे अद्य कः विशेषः? नूतनानि वस्त्राणि धृतानि। मिष्टखाद्यानि कृतानि दृश्यन्ते! का वार्ता?" इति।

शीलया उक्तं सर्वं श्रुत्वा कमला त्वरया स्वगृहं गतवती। सोमनाथेन प्राप्तं वानरसाहाय्यं पतिं निवेद्य सूचितवती च– "भवान् अपि श्वः पर्वतसमीपं गच्छतु। सोमनाथः इव भवान् अपि वानरेभ्यः धनं प्राप्नोतु" इति।

कमलायाः पतिः शेखरः एतत् अङ्गीकृतवान्। अनन्तरदिने वृद्धः शेखरः पृथुकबन्धं स्वीकृत्य पर्वतसमीपं गतवान्। वृक्षशाखायां बन्धं लम्बयित्वा मूर्तिवत् उपविष्टवान् च।

किञ्चित्कालानन्तरं वानाराणां दलं तत्र आगतम्। ते वानराः बन्धे स्थितान् पृथुकान् सम्यक् खादितवन्तः। वृद्धं शेखरं मूर्तिं मन्यमानाः उन्नीय प्रस्थितवन्तः च।

वानराणाम् एतां चेष्टां दृष्टवतः शेखरस्य मुखात् अप्रयत्नेन हासः आगतः। सः उच्चैः हसितवान्। नेत्रे उद्घाट्य वानरान् दृष्टवान् च। एतत् दृष्ट्वा वानराः कुपिताः। ते तं शेखरं तत्रैव पातितवन्तः। तस्य शिरसि ताडयितुम् आरब्धवन्तः। तस्य केशान् आकृष्टवन्तः। नखैः तस्य शरीरे व्रणान् उत्पादितवन्तः। अनन्तरं कीचकुर्वन्तः कूर्दन्तः च ततः निर्गतवन्तः।

वृद्धस्य शेखरस्य शरीरात् रक्तम् आगतम्। सः रोदनं कुर्वन् महता कष्टेन गृहं प्राप्तवान्। पतिः नूतनानि वस्त्राणि आनयति इति भावयन्ती कमला प्राचीनानि वस्त्राणि अग्नौ स्थापितवती आसीत्। नूतनानि वस्त्राणि धृत्वा ग्रामे सर्वत्र सगर्वम् अटनीयम् इति तस्याः इच्छा। किन्तु पत्युः एतां दुरवस्थां दृष्टवत्याः तस्याः स्वप्नमन्दिरं भग्नम्। सा दुःखेन तत्रैव पतितवती।



# प्रकृतिवैचित्र्याणि –





अमेरिकादेशीयस्य मसाचुसेट्स् ह्वेलिङ्ग्सङ्ग्रहालये अतिदीर्घौ दन्तौ स्तः। तिमिङ्गिलस्य एतयोः दन्तयोः दैर्घ्यं ११ इञ्च्, भारः च ३.८८ किं.ग्रां।

## सुदीर्घौ दन्तौ

## मक्षिकाः

गृहेषु सामान्यतः दृश्यमानाः मक्षिकाः अत्यपायकारिणां रोगाणां प्रसारणकार्यं कुर्वन्ति। कालरा, विषमशीतज्वरः, प्लेग् इत्यादयः भयङ्कराः ३० व्याधयः मक्षिकाकारणतः एव प्रसृताः भवन्ति।





## ओपोसम्

अमेरिकादेशे दृश्यमानः ओपोसं वन्यबिडालजातीयः प्राणी। व्याधेन अनुस्रियमाणः एषः यदा धावने अशक्तः भवति तदा मृतः इव अभिनयन् निश्चलस्थित्या शयनं करोति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| इन्द्रधनुः - | Rainbow | मूलम् - | Root |
| उलूकः - | Owl | मृच्छदः - | Tile |
| उलूखलम् - | Stone mortar | मेघगर्जनम् - | Thunder |
| ऊर्णनामः - | Spider | यौतकम् - | Wedding gift |
| कशा - | Whip | राक्षसगोधिका - | Dinosaur |
| काष्ठविक्रेता - | Wood cutter | लड्डुकम् - | A sweetmeat |
| काहलः - | Trumpet | वन्ध्या - | Issueless woman |
| केशप्रसाधनम् - | Combing the hair | वातायनम् - | Window |
| क्षुतवान् - | Sneezed | विदारणम् - | Splitting |
| क्षुवः - | Sneeze | विद्युत् - | Lightning |
| खर्परः - | Shell of an egg | वृकः - | Wolf |
| ख्यापयन् - | Announcing | वृतवती - | Selected her suitor |
| छदिः - | Roof | वृद्धिः - | Interest |
| ताडपत्रम् - | Palm leaf | वेत्रदण्डः - | Cane |
| दास्यम् - | Slavery | वेमा - | Loom |
| नौकास्थानम् - | Port | शवस्थानम् - | Tomb |
| पाञ्चालिका - | Doll | शाद्वलः - | Grassland |
| पृथुकः - | Beaten rice | शिक्या - | Swing(made of rope) |
| प्रहरी - | Watchman | शुनकः - | Dog |
| मक्षिका - | House fly | शृगालः - | Fox |
| मुसलम् - | Pestle | सूकरः - | Pig |



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिका एप्रिल्-८८ मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः –

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

'डिसेम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **मोहकमिदं रूपं वयः च।**

द्वितीयचित्रम् - **निष्कल्मषं हि मनः प्रवृत्तिः च।**

प्रेषिका - आर्.के.डि. भवानी, १६-६-२, गन्तिवारिमार्गः, पूर्णानन्दं पेट्, विजयवाडा-५२०००१६


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०-००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# अहं तस्य अग्रजः

| | |
|---|---|
| गौरीशः - भवान् ...., भवान् राजेन्द्रः खलु? | You! You are Rajendra, aren't you? |
| राजेन्द्रः - आम्, अहं राजेन्दः। भवान् कः इति अहं न ज्ञातवान् ...। | Yes. I am Rejendra. I am unable to place you.... |
| गौ - प्रायः भवान् मां न स्मरति। भवतः पितृव्यपुत्रस्य गृहं मैसूरुनगरे अस्ति खलु? | You do not remember me probably. Your cousin's house is in Mysore city isn't it? |
| रा - आम्। | Yes. |
| गौ - पञ्चभ्यः वर्षेभ्यः पूर्वं भवान् यदा इदम्प्रथमतया मैसूरुनगरम् आगतवान् तदा नगरादिदर्शनार्थं भवता सह लक्ष्मीशः इति कश्चित् आसीत् खलु? | When you were in Mysore, for the first time about five years ago, one Lakshmish took you for sightseeing in Mysore isn't it? |
| रा - आम्। लक्ष्मीशं सम्यक् स्मरामि। तेन सह अहं मैसूरुनगरं तत्परिसरे स्थितान् अन्यान् प्रेक्षणीयान् प्रदेशान् च दृष्टवान्। भवान् तस्य अग्रजः ....? | Yes, I remember Lakshmish very well. I saw many important places in and around Mysore with his help. Are you his brother? |
| गौ - आम्। युक्तः भवतः ऊहः। मम नाम गौरीशः इति। | Yes, you are right. My name is Gowrish. |
| रा - इदानीं सर्वं सम्यक् स्मृतवान्। किन्तु भवान् अस्मिन् नगरे कथम् ...? | Now I understand. But how do you happen to be here? |
| गौ - मम स्थानान्तरण जातम्। गतवर्षे अहम् अत्र आगतवान्। | I have been transferred. I came here last year. |
| रा - एवं वा! अहम् अस्मिन् वर्षे अत्र वित्तकोशे उद्योगं प्राप्तवान्। अतः ममापि अत्रैव वासः। | Is that so! I secured a job in a Bank this year. So I am also staying here. |
| गौ - महान् सन्तोषः। एषः मम सङ्केतः। कदाचित् आगच्छतु मम गृहम्। | I am very happy. Here is my address. Please drop in at my place sometime. |
| रा - अस्तु तावत्। | Ok, fine. |